श्रीः

# भाषापरिच्छेदः ।

मैथिलझोपाख्यपण्डितश्रीमुकुन्दशर्मणा सङ्कलितया

अन्वितार्थप्रदीपिकाख्यया व्याख्यया

सहितः ।





मुल्यं १० आणकाः ।

श्रीः ।

# भाषापरिच्छेदः ।

पुराविविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजमिथिलेशश्री
मल्लक्ष्मीश्वरसिंहवहादुर-जी-सी-आइ-ई महोदयानां ज्येष्ठ-
धर्मपत्न्याः श्री५ मल्लक्ष्मीवतीत्यन्वर्थाख्याविभूषि-
ताया धर्माधिकारिपदवीमनुसंदधता,
साम्प्रतञ्च मुजफ्फरपुरीय धर्म्मसमाजसंस्कृतमहाविद्यालये कर्म्म-
काण्डाध्यापकपदमलङ्कुर्वता
**मैथिलझोपाख्यपण्डितश्रीमुकुन्दशर्म्मणा सङ्कलितया**
**अन्वितार्थप्रदीपिकाख्यया व्याख्यया**
संवलितः
**तेनैवोक्तपण्डितवरेण सुपरिष्कृतः संशोधितश्च.**

(द्वितीयावृत्तिः)

स एष
**मुम्बय्यां**
**पाण्डुरङ्ग जावजी**
इत्येतैः स्वीये निर्णयसागराख्यमुद्रणालये मुद्रयित्वा प्रकाशितः.

शाकः १८४४ सन १९२२.

मूल्यं १० आणकाः ।

# भूमिका.



॥ श्रीः ॥ सुप्रसिद्धएवायं "भाषापरिच्छेद" नामको ग्रन्थो महामहोपाध्यायश्रीमद्विश्वनाथपञ्चाननभट्टाचार्यप्रणीतः। इदमपि चातिरोहितमेव विपश्चितां यदयं श्लोकमयः प्रबन्धो राजीवनामकनिजप्रियशिष्यदयावशंवदेन तेन सर्वतः सारमयः कृत इति. अस्य च ग्रन्थकर्त्रनुक्तेनापि भाषापरिच्छेदनाम्ना प्रसिद्धिकारणन्तु न्यायवैशेषिकभाषापरिच्छेदकत्वमेवेति वाढमुत्पश्यामः, यद्यप्ययं ग्रन्थकर्त्रैव सिद्धान्तमुक्तावलीसमाख्यया टीकया व्याख्यातः तथापि "निजनिर्म्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः। विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवद" इति तट्टीकादौ प्रतिज्ञातवता तेन तथैव कृतत्वात्तस्या विषमतया व्युत्पित्सुसामान्यजनधिषणावधीरितत्वमेवाद्ययावदासीत्, अत्रान्तरे च काशिकराजकीयसंस्कृतप्रधानपाठशालीयप्रथमपरीक्षायामथच पञ्चनदीयसम्राट्संस्थापितप्रधानपाठशालीयप्राज्ञपरीक्षायामेतस्य समावेशदर्शनेन प्रचुरप्रचारयोग्यतामालोचयद्भिः सरलसारबहुलटीकया समं पृथक् मुद्राप्य प्रकाशयितुमिच्छद्भिर्मोहमयीराजधानीस्थनिर्णयसागराख्यमुद्रायन्त्रालयाध्यक्षैः श्रीमत्तुकाराम–जावजी–महोदयैस्सबहुमानमेतत्करणे प्रवर्त्तिता वयं प्रायशस्तट्टीकातोऽन्यतश्च सारमाहृत्य निजमनीषया समालोच्य चाल्पमतिकानामुक्तपरीक्षादित्सूनामन्येषां चान्तेवासिजनानां सौकर्याय निर्म्मायोक्तमहोदयाय ससर्वाधिकारम्मुद्रापयित्वा प्रकाशयितुं समर्पितेयम्, (अन्वितार्थदीपिका) ॥ समाशास्महे च यदेतामधिगत्यास्तन्यायवैशेषिकमतबोधैरन्तेवासिजनैः सानन्दं सिद्धान्तमुक्तावलीगूढफक्किकाशयोऽवगंस्यत इति ॥ यदि चेमां निर्म्मत्सराः सहृदयवरा विद्वांसोऽपि निजकृपादृष्ट्या कृतार्थयेयुस्तदा त्वात्मनः सर्वथा सफलोद्योगान् मन्यामह इति कृतमस्त्यर्थनया, क्षन्तारश्च गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियः सर्वथा संशोधितेऽप्यत्र शीशकाक्षरयोजकदोषेण मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन् विरमामि निरर्थकाद्विस्तरादिति निगदति विदुषामाश्रवः—

दरभङ्गामण्डलान्तर्गत हाटीतप्पान्तर्गत–
हरिपुरग्रामनिवासी करमाहावंशाङ्कुरः
**झोपाख्यनन्दलालशर्म्मतनुजन्मा**
**श्रीमुकुन्दशर्म्मा.**

---

१ भाषाशब्दः संकेते साङ्केतिकशब्दे वा वर्त्तते अत एवाधुनिकसङ्केतः परिभाषेति, परितोऽव्याप्तां भाषां परिभाषां प्रचक्षत इतिच वृद्धाः। भाषयोः परिच्छेदः परिचयो निर्णयः इतरभिन्नतया ज्ञानं वा यत्र सः। ग्रन्थेच प्रतिपादकतासम्बन्धेन स वर्त्तत इति न्यायवैशेषिकसाङ्केतिकशब्दतदर्थयोर्यो निर्णय(स्तत्त्वावबोध)स्तत्प्रतिपादकोऽयं भाषापरिच्छेद इति समुदितार्थो बोध्यः।

श्रीः ।

# भाषापरिच्छेदः ।

## अन्वितार्थदीपिकाव्याख्यासहितः ।

श्रीगणेशाय नमः ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

श्रीमती प्रथमा देवी स्तुता स्ताद्विघ्नशान्तये ।
यत्पादस्वर्द्रुमाऽसेवावाप्तधीर्विवृणोम्यहम् ॥ १ ॥
श्रीविश्वनाथकृतिना निर्मितां कारिकावलीम् ।
मुदेऽन्तेवासिनामत्र संविघ्नमनसां मुहुः ॥ २ ॥

अथ श्रीमान् तत्रभवान् विश्वनाथपञ्चाननभट्टाचार्यः राजीवनामकस्य कस्यचित्स्वप्रियशिष्यस्य प्रार्थनाभिरावर्जित[1]स्वान्तः न्यायवैशेषिकसम्मतान्पदार्थान् पद्यबन्धेन संक्षिप्य व्युत्पिपादयिषुर्ग्रन्थ[2]ारम्भे विघ्नविघाता[3]

१ वशीकृतचित्तः ।

२ अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायो ग्रन्थः । अस्यापि पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इति गौतमोक्तेरन्यत्रोपपादितदिशा परम्परया मोक्षरूपालौकिकफलकत्वात्तत्त्वं बोध्यम् । आद्या प्रवृत्तिश्चारम्भः ।

३ विघ्नोऽन्तरायः कार्यसमाप्तिप्रतिबन्धको दुरितविशेषः विघातो ध्वंसः विघ्नानां विघातो यस्मै इति चतुर्थ्यर्थे व्यधिकरणबहुव्रीहिणा चरमवर्णस्य चरमकृतेर्वा ध्वंसरूपसमाप्तिफलमुच्यते मङ्गलस्य च वक्ष्यमाणरूपस्याशुतरविनाशिनः कालान्तरभाविसमाप्तिसाधनत्वानुपपत्त्या विघ्नध्वंसो द्वारम् (व्यापारः) प्रतिबन्धकाभावत्वेन तस्यावश्यकत्वात्, द्वारत्वंच तज्जन्यत्वे सति तज्जन्यजनकत्वमस्ति च तन्मङ्गलजन्यस्य तस्य (विघ्नध्वंसस्य) मङ्गलजन्यसमाप्तिजनकत्वात् । इत्थंच मङ्गलं समाप्तिफलकं समाप्त्यन्याऽफलकत्वे सति सफलत्वाद्यन्नैवं तन्नैवं यथा घटः, इति परिशेषानुमानमत्र(प्राचीन)नये बोध्यम् । सफलत्वं चाविगीत-(अनिन्दित)शिष्टाचारविषयत्वाद्दर्शपौर्णमासयागवत् । कादम्बर्यादौ सत्यपि मङ्गले समाप्त्यभावस्तु प्रभूतमङ्गलनाश्यविघ्नसत्वादेव, एवंच स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन विघ्नध्वंसविशिष्टसमाप्तिं प्रति । समवायेनात्मनिष्ठप्रत्यासत्त्या मङ्गलं कारणमिति पर्यवसि-

कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नूतनेति । नूतनो नवीनः सद्यःसंभृतसलिल इति यावत् । यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य स तस्मै । एतेन यथा नूतनो जलधरः दृष्टमात्र एवानुपदं वृष्टिफलप्रदस्तथायमप्यनुध्यात एव भक्ताभीष्टफलप्रद इति सूचितम् । सूचितममुमर्थं सदृष्टान्तं प्रमाणयन् विशिनष्टि—गोपेति । गोपानां या वधूट्यो युवत्यस्तासां यानि दुकूलानि अन्तरीयक्षौमवसनानि क्षौमं दुकूलं स्याद्द्वे त्वित्यमरः । तेषां चौरायापहारिणे तस्मै श्रुतिस्मृतिपुराणादिप्रसिद्धाय कृष्णाय भगवते वासुदेवाय नमः नमस्कारोऽस्तु ॥ ननु चौराय नमनमयुक्तमतस्तस्येश्वरत्वं नैयायिकमतेनानुमित्या साध-

---

तम् । नातश्चरमवर्णध्वंसरूपसमाप्तेराकाशनिष्ठत्वेऽपि क्षतिः । वस्तुतो ज्ञानविशेष एव समाप्तिरिति न दोषशङ्कापि । चिन्तामणिकारास्तु मङ्गलस्य विघ्नध्वंस एव फलम् विघ्नसंशयनिर्णययोः शिष्टानां तदाचरणात् । विघ्नाभावस्याकाङ्क्षितत्वात् । निर्विघ्नं परिसमाप्यतामिति कामनापि नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीतिन्यायेन विघ्नध्वंसविषयत्वेनोपपन्ना न समाप्तिसाधनत्वव्यवस्थापिका स्वर्गी स्यामितिवत् । समाप्तिस्तु बुद्धिप्रतिभादिलोकावगतकारणकलापादेवेत्याहुस्तन्मते तु विघ्नानां विघात इति षष्ठीतत्पुरुषोऽत्र बोध्यः ।

१ मङ्गलत्वंच स्तुत्याद्यन्यतमत्वम् । स्तुतिश्चोत्कर्षवत्तया ज्ञापनम् ।

२ शिक्षा च स्वकर्तव्यत्वेन ज्ञानं । शिष्याणां शिक्षेति षष्ठीतत्पुरुषः । ग्रन्थारम्भेऽस्मत्कृतमङ्गलं दृष्ट्वाऽस्मच्छिष्या अप्येवं कुर्युरित्याकारकाभिप्रायेणात्र सा बोध्या ।

३ निबध्नाति ग्रन्थघटकीकरोति ।

४ इवार्थगर्भबहुव्रीहौ पूर्वपदं स्वसम्बन्ध्युत्तरपदार्थसदृशे लाक्षणिकमित्यनुगतदिशाऽत्र नूतनजलधरो रुचिर्यस्येत्येव विग्रहः । नूतनजलधरपदं नूतनजलधरसम्बन्धिरुचिसदृशपरमिति सामानाधिकरण्यमुपपद्यते, एवमन्यत्राप्यूह्यम् ।

५ स्मृतमात्रः ।

६ तासां वस्त्राण्यपहृत्य धर्मशास्त्रविरुद्धनग्नस्नानकर्त्रींस्ता यः शिक्षितवाननुपदंच तासामभिलषितं च पूरितवानित्थं सदुपदेष्ट्रे भक्ताभिलषितफलदात्रे च ।

७ प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नापेक्षते, इति महदुक्तेरत्र नास्ति यच्छब्दापेक्षा ।

८ तथाच तत्किमर्थमिति कैमर्थ्याकाङ्क्षानिवर्तकोपस्थितिजनकस्य संसारेति विशेषणस्यात्र सत्त्वेन न समाप्तपुनरात्तत्वदोषाशङ्कापि स्वविशेषणानुपादानकालीनकैमर्थ्याकाङ्क्षानिवर्तकोपस्थित्यजनकपदघटितत्वं हि समाप्तपुनरात्तत्वम् ॥ यथोक्तं चन्द्रालोके "समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् । नेत्रानन्दी तुषारांशुरेत्यम्बुनिधिबान्धव" इति ।

यितुं विशिनष्टि—संसारेति । संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः । ईश्वरस्य सिसृक्षावशादेव *परमाणुषु क्रियया परमाणुद्वयसंयोगेन द्व्यणुकमुत्पद्यते, त्रिभिर्द्व्यणुकैस्त्र्यणुकमेवं चतुरणुकादिक्रमेण महती पृथिवी, महत्य आपः, महत्तेजः, महान्वायुरुत्पद्यत इत्येवं सृष्टिक्रमं नैयायिका मन्वते, श्रुतिस्त्वीश्वरोक्तेति नाद्यापि प्रमाणम् । अनुमित्या तत्साधने तु तदुक्ता द्यावापृथिवी जनयन्देव एक आस्ते विश्वस्य कर्ता भुवनस्य गोप्तेत्यादयः श्रुतयोऽप्यत्र प्रमाणं भवितुमर्हन्ति ॥ १ ॥

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावाः पदार्थाः सप्त कीर्तिताः ॥ २ ॥

अथ पदार्थानुद्दिशन् शिष्यावधानाय प्रतिजानीते—द्रव्यमित्यादि । द्रव्यं गुण इति जात्येकवचनम् । गुणा इति बहुवचनान्तपाठस्तु जात्याख्यायामेकस्मिन्नपि पाक्षिकं बहुवचनं भवति, जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति पाणिनिसूत्रात्, ब्राह्मणाः पूज्या इतिवत्, इति

---

१ अनुमितिप्रकारश्च जगत्कार्यं सावयवत्वाद्घटवत् । जगत्सकर्तृकं ( कर्तृजन्यं ) कार्यत्वाद्घटवत् इति, न च तत्कर्तृत्वमस्मदादीनां सम्भवत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः ।

२ पदस्यार्थः पदार्थ इति व्युत्पत्त्याऽभिधेयत्वं ( पदशक्त्या प्रतिपाद्यत्वम् ) पदार्थसामान्यलक्षणम्। उद्देशश्च नामधेयेन पदार्थमात्राभिधानम् । तं विना लक्षणं नोपपद्यते, उद्दिष्टस्यैव हि लक्षणं भवति, ततश्च परीक्षेति, एतेन "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः ( भवति ) उद्देशो लक्षणं परीक्षा चेति" भाष्योक्ता शास्त्रप्रवृत्तिविधा प्रदर्शिता भवति, एतत्तत्त्वमग्रे स्फुटीभविष्यति ।

३ प्रतिज्ञा च स्वकर्तव्यत्वेन निर्देशः । अत एवाग्रे "निरूप्यन्त इति शेष" इति वक्ष्यते । द्रव्यादिनिरूपणस्यैव स्वकर्तव्यत्वेन प्रतिज्ञानात् ।

---

* परमाणुसद्भावे प्रमाणंतु जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्दृश्यते तत्सावयवम् चाक्षुषद्रव्यत्वाद्घटवत् । त्र्यणुकावयवोऽपि सावयवः । महदारम्भकत्वात्कपालवत् । यो द्व्यणुकावयवः स परमाणुः । स च नित्यः । कार्यत्वेऽनवस्थाप्रसङ्गात् । तथाचानन्तावयवधारावत्त्वेन मेरुसर्षपयोरपि साम्यप्रसङ्गः ॥ सृष्टिप्रलयसद्भावे तु धाता यथापूर्वमकल्पयदित्यादिश्रुतय एव प्रमाणम् । सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः । सर्वभावकार्यध्वंसो महाप्रलय इति विवेकः ।

सूचनाय, यद्वा गुणत्वं न जातिरिति सिद्धान्तमताभिप्रायकः । एतत्तत्वं मुक्तावल्यादौ स्फुटम् ॥ संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्तीति भूषणमतं दूषयितुं स्वमतमाह—**तथा कर्मेति** । यथा गुणः पृथक्पदार्थस्तथा कर्मापीत्यर्थः । कर्मेत्यपि जातावेकवचनम् । यद्वा चलनात्मकमेकमेव कर्म, पञ्चेति तद्भेदप्रदर्शनं तु शिष्यबुद्धिवैशद्यार्थमिति सूचनाय । एवं सामान्यमपि नित्यमेकमनेकानुगतमित्येकवचनान्तमुद्दिष्टम् । तच्च **सविशेषकम्** । विशेषैः सह वर्तमानम् साहित्यंच पदार्था इत्येकबुद्ध्युपारोहमात्रेण, अर्थाद्विशेष इत्येकः पदार्थः । समवायस्त्वेक एवेत्येकवचनम् । अभावोऽधिकरणात्मक एवेति प्राभाकरमतं दूषयितुं पुनस्तथेत्युक्तम् । अभावा इति बहुवचनान्तः पाठः । अभावत्वस्य जातित्वाभावात् । **पदार्था इति** । निरूप्यन्त इति शेषः । सप्तेति पदं सप्तैव पदार्था इति परिसंख्यातुम् । ननु सन्त्यन्येऽपि पदार्थास्ते कुतो

---

१ संयोगानुकूलव्यापाररूपम् ।

२ दूषणबीजंतु अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तकल्पनायां लाघवम् । किंच येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च गृह्यत इति नियमेन गन्धाद्यभावानां पुष्पादिरूपत्वेऽप्रत्यक्षत्वापत्तिः । तद्ग्रहणे घ्राणादीनामसामर्थ्यावधारणादिति ।

३ द्रव्यत्वादिरूपा ये सप्तोपाधयस्तदन्यतमवन्तः पदार्था इत्यर्थः । यद्यपि मीमांसकैश्चन्द्रकान्तमण्याद्यसमवधानसमवधानाभ्यां वह्निना दाहतदभावयोः क्रमेण दर्शनात् शक्तिनामकः पदार्थ ऊरीक्रियते, तथापि उत्तेजकाभावविशिष्टमण्याद्यभावस्य प्रतिबन्धकाभावविधया हेतुत्वाभ्युपगमेनैव निर्वाहे अतिरिक्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्सप्तैवेत्यभ्युपगतमेभिः सादृश्यमपि तद्भिन्नत्वे सति तद्गतभूयोधर्म*वत्त्वरूपं नातिरिक्तं, नव्यास्तु सादृश्यमतिरिक्तमेव, नचातिरिक्तत्वे पदार्थविभागव्याघात इति वाच्यम् तस्य साक्षात्परम्परया वा तत्त्वज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात् एवमधिकरणत्वाधेयत्वादिकमपि, तस्य संयोगादिरूपत्वे बदरकुण्डसंयोगस्य द्विष्ठत्वेन कुण्डे बदरमितिवद्बदरे कुण्डमित्यपि स्यादित्याद्यापत्तिः । एवं प्रतियोगित्वादिकमाकाशत्वादिकंचेत्याहुः । अपरे पुनरुपाध्यादीनां स्वरूपसम्बन्धविशेषरूपत्वमेवोपयन्ति तन्मते तु पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमत्वव्याप्यमिति व्याप्तिलाभायेह सप्तपदोपादानमन्यतमत्वं तु तावदन्यान्यत्वमिति ।

---

* तद्भिन्नत्वंनाम तत्प्रतियोगिकभेदवत्त्वं भेदवत्त्वं च भेदः स चान्योन्याभावएव, एवंधर्मवत्त्वं धर्मः सोऽपि विशेषणीभूतगुणक्रियादिरूप एवेति ।

नोक्ता इत्यत आह—कीर्तिता इति । तथाचैतेभ्योऽन्ये पदार्थाः सन्त्येव न, कणादप्रभृतिभिरनुक्तत्वादिति भावः ॥ २ ॥

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।**
**द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥**

एवं पदार्थानुद्दिश्य तद्बलादेव प्रथमं द्रव्याणि विभजते—क्षित्यविति । क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद्वायुः, व्योम आकाशम्, कालः समयः, दिक् आशा, देही आत्मा, मन एतानि नैव द्रव्याणीत्यर्थः । गुणान्विभजते—अथ गुणा इति ।

---

१ *गुणक्रियावत्त्वं, समवायिकराणत्वं, वा द्रव्यसामान्यलक्षणम् । अर्थाद्यत्समवायसम्बन्धेन गुणस्य कर्मणो वाऽऽश्रयः यच्च कस्यापि समवायिकारणं भवेदेव तदेव द्रव्यं नाम ॥ स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलोव्यापारो विभजतेरर्थः । स्वं विपूर्वको भजधातुस्तत्समभिव्याहृतं यत्पदं प्रकृते च तद्द्रव्यपदं तदर्थतावच्छेदकः (तदर्थे विशेषणीभूतः ) यो धर्मः द्रव्यत्वरूपः तद्व्याप्या मिथः ( परस्परं ) विरुद्धा ( असमानाधिकरणा ) ये यावन्तोऽनेके धर्माः पृथिवीत्वादयस्तत्प्रकारकं यज्ज्ञानं पृथिवी आप इत्यादि तदनुकूलः ( तज्जनकः ) व्यापारः पद्यात्मकवाक्यप्रयोगरूपः स एव विभाग इत्येवमन्यत्राप्यूह्यम् ।

२ तमः खलु चलं नीलं परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति मीमांसकानां प्रवादः प्रमादमूलक एव, यतो हि तमो द्रव्यं न भवति आलोकनिरपेक्षचक्षुर्ग्राह्यत्वादालोकाभाववत् । किंतु प्रौढप्रकाशकतेजःसामान्याभावस्तमः । तत्र नीलं तमश्चलतीति प्रतीतिर्भ्रमः । नीलत्वं हि खनीलिमत्ववद्दृष्टिदोषजनितं चलत्वं चालोकापसारणौपाधिकं भ्रम इति ।

३ द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणसामान्यलक्षणम् ।

---

* ननु गुणवत्त्वादेः स्वरूपलक्षणत्वं न युज्यते लक्ष्यतावच्छेदकव्यापकं हि लक्षणं स्वरूपलक्षणम्, तटस्थलक्षणंतु लक्ष्यतावच्छेदकसमानाधिकरणं नातीवोपयुज्यते, तथा चाद्यक्षणे ( उत्पत्तिद्वितीयक्षणे-उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति द्रव्यगुणयोः कार्यकारणभावोपष्टम्भनियमात् ) उत्पन्नविनष्टे ( यादृशद्रव्यारम्भकसंयोगजनकक्रियोत्पत्तेस्तृतीयक्षणे अवयवान्तरे तादृशसंयोगनाशिका क्रिया जाता तादृशे ) च द्रव्येऽव्याप्तिरिति चेन्न गुणसमानाधिकरण–( समवायसम्बन्धेन गुणवद्वृत्ति– ) सत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात् । गुणादावतिव्याप्तिवारणाय गुणसमानाधिकरणेति जातिविशेषणम् । सत्तामादायातिव्याप्तिवारणाय सत्ताभिन्नेति, द्रव्यगुणान्यतरत्वमादाय गुणेऽतिव्याप्तिवारणाय जातीति । एवमुत्तरत्राप्यनुक्तस्थले यथायथमूहनीयम् ॥

एते चतुर्विंशतिसंख्याकाः । एषु चतुर्विंशतित्वमेकार्थसमवायेन बोध्यम् ॥ ३ ॥

स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

परिमितिः परिमाणम् ॥ ४ ॥ अदृष्टम् । धर्माधर्मौ, एवेत्यवधारणे । एत एव गुणा नान्ये-इत्यर्थः ॥ ५ ॥

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

कर्माणि विभजते—उत्क्षेपणमिति । एतानि पञ्च कर्माणि । कानि तानि—उत्क्षेपणम् ऊर्ध्वदेशसंयोगानुकूलो व्यापारः । अपक्षेपणम् अधोदेशसंयोगानुकूलो व्यापरः ।—आकुञ्चनं शरीरसन्निकृष्टदेशसंयोगानुकूलो व्यापारः । प्रसारणं । शरीरविप्रकृष्टदेशसंयोगानुकूलो व्यापारः । गमनमुत्तरदेशसंयोगानुकूलो व्यापारः । स च पूर्वदेशविभागपूर्वक एव, एवमुत्क्षेपणादिलक्षणेषु यत्किंचिद्देशविभागपूर्वक इत्यादिर्बोध्यः ॥ ६ ॥

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

ननु भ्रमणादिकमपि पञ्चकर्माधिकतया (कर्मत्वविभाजकोपाधिभिर्भ्रमणत्वादिभिः) कुतो नोक्तमत आह—भ्रमणमिति । भ्रमणम-

---

१ रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति सूत्रेण काणादैः सप्तदशोक्ताः । गुरुत्व-द्रवत्व-स्नेह-संस्कार-धर्माधर्म-शब्दाः सप्त चशब्दसमुच्चितत्वेन भाष्यकारोक्ता मिलिता चतुर्विंशतिरित्यर्थः । अत्र सूत्रोक्तक्रमत्यागे बीजं मृग्यम् ।

२ स्वसमवायिसमवेतत्वेन स्वं संख्या तत्समवायि द्रव्यं तत्समवेतत्वं गुणेष्विति ।

३ अधर्मो न धर्माभावरूपोऽपितु धर्मविरुद्धो भावरूपः निन्दितकर्मजन्मा नरकादिप्राप्तिहेतुर्गुणः असुर इतिवद्विरोधेऽर्थे नञत्र ।

४ संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मसामान्यलक्षणम् ।

नियतदेशसंयोगानुकूलो व्यापारः । **रेचनं** मलादेर्निःसारणम् अधोदेशसंयोगानुकूलो व्यापार इति यावत् ।—**स्यन्दनं** क्षरणं जलादेर्निम्नदेशसंयोगानुकूलो व्यापारः । ऊर्ध्वज्वलनमग्निशिखादेरूर्ध्वदेशसंयोगानुकूलो व्यापारः । **तिर्यग्गमनं** कुटिलगमनम् । एतत्सर्वमपि गमनाद्गमनपदादेव[1] लभ्यते प्राप्यते । ज्ञायत इति यावत् ॥ गमनस्यैव प्रकारान्तरमिति भावः ॥ ७ ॥

**सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।**
**द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥**

सामान्यं[2] निरूपयति—**सामान्यमिति** । समानानामेकाकारकप्रतीतिविषयाणां भावः सामान्यं, ब्राह्मणादित्वाद्भावे ष्यञ् जातिरिति तदर्थः । तद्द्विविधं **परमुत्कृष्टमधिकदेशवृत्ति अपरं** तद्विपरीतमल्पदेशवृत्ति, तत्र द्रव्यादीनां यत्त्रिकं त्रित्वसंख्याविशिष्टः समुदायस्तत्र वृत्तिः सत्ता[3] परतयोच्यते, परत्वप्रकारकोच्चारणविषयः । अत्र हेतुगर्भं विशेषणं **द्रव्यादीति** । यतो द्रव्यादित्रिकवृत्तिरतः ॥ ८ ॥

**परभिन्ना च या जातिः सैवापरतयोच्यते ।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥**

**परभिन्ना** सत्ताभिन्ना सर्वापि । **परापरतया** परतया अपरतया च ॥ ९ ॥

---

१ अथैवमुत्क्षेपणादीनामपि गमनेऽन्तर्भावाद्गमनादेव लाभे उत्क्षेपणत्वादिभिरपि विभागोऽनुचितः । नह्युत्क्षेपणादौ गमनत्वं नानुभविकम् ( नानुभवसिद्धम् ) ऊर्ध्वमधश्च क्षिप्तलोष्टादावूर्ध्वं गच्छत्यधो गच्छतीति प्रत्ययादिति चेन्न स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति ।

२ तल्लक्षणंतु नित्यत्वे सत्यनेकसमवेतत्वम् । तथाचोक्तं नित्यमेकमनेकानुगतं सामान्यम् इति ।

३ अस्तीति सत् सतो भावः सत्ता "सदिति* यतो द्रव्यगुणकर्मसु सा सत्ता" इति वै० सूत्रम् ।

---

* इतिकारेण प्रत्ययव्यवहारयोः प्रकारमुपदिशति, तथाच द्रव्यादिषु त्रिषु सत्सदिति प्रकारको यतः प्रत्ययः सदिदं सदिदमित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता, इति तदर्थः ॥

**व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।**
**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

ननु विरुद्धयोः परत्वापरत्वयोः कथमेकत्र स्थितिस्तत्राह—**व्यापकत्वादिति** । द्रव्यत्वादेर्हि पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात्परत्वम् । सत्तापेक्षया च व्याप्यत्वादल्पदेशवृत्तित्वादपरत्वम् । तथा चापेक्षिकधर्मद्वयस्यैकत्र समावेशादुभयमविरुद्धम् । विशेषं निरूपयति—**अन्त्य इति** । अन्ते अवसाने अर्थात्कल्पनायाः । वर्तत इत्यन्तः भवार्थे यत् । अर्थात् यः पदार्थश्चरमव्यावर्तकरूपेण स्वीकृतोऽथ च नित्यद्रव्येषु परमाण्वाकाशादिषु वृत्तिर्वर्तनं स्थितिर्यस्य स विशेषः विशेषनामको धर्मः **परिकीर्तित** उक्तः । आचार्येणेति शेषः ।—**अयं भावः** । सावयवपदार्थानामवयवभेदाद्भेदः कल्पयितुं शक्यते । निरवयवानां परमाण्वादीनां तु भेदकः[1] विशेष एव । स तु स्वत एव[2] व्यावृत्तः (भिन्नः) इति न तत्र[3] विशेषान्तरापेक्षा[4]स्तीति ॥ १० ॥

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

समवायं दर्शयति—**घटादीनामिति** । षष्ठ्यर्थः प्रतियोगित्वं कपालादाविति सप्तम्यर्थोऽनुयोगित्वम् । घटपदमवयव्युपलक्षकम् । कपालपदमवयवोपलक्षकम् । द्रव्यसमवायिकारणमवयवस्तज्जन्यं द्रव्यमवयवि । तथा चावयविप्रतियोगिकोऽवयवानुयोगिकः । गुणकर्मप्रतियोगिको

---

१ भेदबुद्धिजनकः ।

२ स्वतोव्यावृत्तत्वंच स्वभिन्नलिङ्गजन्य-स्वविशेष्यक-स्वसजातीयेतरभेदप्रकारकानुमित्यविषयत्वम् । साजात्यंच पदार्थविभाजकोपाधिरूपेण द्रव्यत्वादिना बोध्यम् । तेन द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेऽपि न क्षतिः ॥ विशेषे भेदानुमितिश्च अयं (पृथिवीपरमाणुगतः) विशेषः एतस्मात् (जलादिपरमाणुगतात्) विशेषात् भिन्नः अत्र हेतुर्विशेषात् । इत्येव न तु धर्मान्तरम् । यथा घटः पटाद्भिन्नो घटत्वात् इत्यादिस्थलेषु घटाद्भिन्नो घटत्वादिः ।

३ विशेषव्यावृत्तौ ।

४ व्यावर्तकान्तराऽपेक्षा ।

द्रव्यानुयोगिकः। जातिप्रतियोगिको द्रव्यगुणकर्मानुयोगिकः। चकाराद्विशेषप्रतियोगिको नित्यद्रव्यानुयोगिकश्च सम्बन्धः समवायः। तथाचोक्तमयुतसिद्धयोः सम्बन्धः समवाय इति ॥ ११ ॥

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।**

अभावं विभजते—**अभावस्त्विति**। नञर्थविषयकप्रत्ययरहितो भावस्तद्विपरीतो नञ्पदजन्यप्रतीतिविषयोऽभावः। स तु **द्विधा** द्विप्रकारकः। प्रकारमाह—**संसर्गेति**। संसर्गश्चान्योन्यं च तयोरभावः स चासौ भेदस्तस्मात्। पञ्चम्यास्तसिल्। संसर्गाभावान्योन्याभावभेदादित्यर्थः। संसर्गः सम्बन्धः। स चात्र वृत्तिनियामको गृह्यते, तदवच्छिन्नप्रतियोगिताकोऽभावः संसर्गाभावः। यस्याभावः स प्रतियोगी, प्रतियोगिनो धर्मः प्रतियोगिता तस्याश्चावच्छेदकद्वयं धर्मः संवन्धश्च ताभ्यां

---

१ युतं पृथग्भूतं सत्सिद्धं न भवतीत्ययुतसिद्धम्। अयुतसिद्धयोः (पृथगसिद्धयोः) पदार्थयोः सम्वन्धः समवायः। अर्थात्पृथग्भूतं *सत् ययोरुत्पत्तिरुपलब्धिर्वा नास्ति तयोर्यः सम्वन्धः स समवायः यथा घटकपालयोरित्यादि ॥ समवायसत्त्वे चानुमानं प्रमाणम्। नीलो घट इति विशिष्टबुद्धिः विशेषणविशेष्यसम्वन्धविषया विशिष्टबुद्धित्वाद्दण्डीपुरुष इति विशिष्टबुद्धिवत्। स च दण्डपुरुषयोरिव गुणगुणिनोः संयोगादिर्न सम्भवतीति समवाय एव तद्विषयः कल्प्यते।

२ यदि च इह कपाले घटो भविष्यतीतिप्रतीतिसाक्षिकस्य प्रागभावस्यैवमिह कपाले घटो ध्वस्त इति प्रतीतिसाक्षिकस्य ध्वंसस्य नञ्पदजन्यप्रतीतिविषयत्वं नास्तीत्युच्यते तदा प्रतियोगिसापेक्षप्रतीतिविषयत्वमभावसामान्यलक्षणम्।

३ षष्ठ्यर्थः सम्वन्धः स च स्वविशिष्टप्रतियोगिता-( निरूप )कत्वरूपः। वैशिष्ट्यं च स्वावच्छिन्नत्वस्वनिष्ठत्वान्यतरसम्वन्धेन।

४ वृत्तेर्वृत्तितायाः (आधेयतायाः) नियामकः सम्बन्धो वृत्तिनियामकः। येन सम्वन्धेन आधेय आधारे वर्तते सः। अथवा तादात्म्येतरसम्वन्धावच्छिन्नप्रतियोगिताकोऽभावः संसर्गाभावः। अभेदस्तादात्म्यम्।

५ तदवच्छिन्ना प्रतियोगिता यस्य सः। शैषिकः कन्।

---

* क्रियाविशेषणमिदम् क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति नियमः।

सा ऽवच्छिद्यते ( विशिष्यते ) इति तदवच्छिन्ना सोच्यते, तत्र प्रतियोगितायाः समनियतो—( अन्यूनानतिप्रसक्तो ) धर्मः प्रतियोगितावच्छेदकः प्रतियोगी *स्वाधिकरणे येन सम्बन्धेन स सम्बन्धश्च प्रतियोगितावच्छेदकः । यथा भूतले घटो नास्तीत्यत्र घटत्वं संयोगसम्बन्धश्च घटनिष्ठप्रतियोगितावच्छेदकः । स चाभावस्त्रैविध्यं त्रिविधत्वमापन्नः प्राप्तः त्रिप्रकारक इत्यर्थः । तत्प्रकारमाह—**प्रागित्यादिना-एवमित्यन्तेन** । 'प्राक् पूर्वम्—अर्थात्प्रतियोगिसत्तायाः यः अभावः प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः भविष्यतीति व्यवहारहेतुः स प्रागभावः स चानादिः सान्तश्च । प्रतियोगिजन्यः

---

* एतच्च प्रायोवृत्त्या सामान्याभावविषयकम् । अभावः स्वाधिकरणे येन रूपेण येनसम्बन्धेन वर्त्तते तद्रूपं (सधर्म्मः) ससम्बन्धश्च प्रतियोगितावच्छेदक इति प्राचीनलेखानुसारात् । नवीनास्तु=सामान्याभाव-विशेषाभाव-(व्यधिकरण—धर्म-सम्बन्धावच्छिन्नाभाव) योः प्रतियोगितावच्छेदकधर्म-सम्बन्धावित्थमनुगमयन्ति—

यदभावनिष्ठानुयोगिताविशिष्टो यः सम्बन्धः स एव तदभावप्रतियोगितावच्छेदकः सम्बन्धः । वैशिष्ट्यम्—स्वावच्छेदकावच्छिन्नप्रकारताविशिष्टप्रकारतानिरूपितसांसर्गिकाऽवच्छेदकताश्रयत्वसम्बन्धेन । प्रकारतावैशिष्ट्यञ्च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिवध्यतावच्छेदकत्व-स्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन । यथा संयोगेनभूतलेघटोनास्तीतिप्रतीतौ संयोगएव सम्बन्धः प्रतियोगितावच्छेदकः । संयोगसम्बन्धावच्छिन्नघटाभावत्वरूपतादृशानुयोगितावच्छेदकावच्छिन्नप्रकारतया विशिष्टा या संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारता तादृशप्रकारतायाः सांसर्गिकावच्छेदकत्वं संयोगसम्बन्ध एव वर्त्तते अत्र संयोगेन घटोनास्तीति बुद्धेस्तत्रसंयोगेन घटोऽस्तीतिबुद्धेश्चमिथः प्रतिवध्यप्रतिबन्धकभावेन तादृशप्रकारतावैशिष्ट्यं प्रकारतायामक्षतमेव । एवं यदभावनिष्ठानुयोगिताविशिष्टो यो धर्म्मः सएव प्रतियोगितावच्छेदकोधर्मः । वैशिष्ट्यं पूर्ववदेव । इयानेव विशेषः । सम्बन्धघटकप्रकारतायाः सांसर्गिकावच्छेदकत्वस्थाने संसर्गावच्छिन्नावच्छेदकत्वं बोध्यम् । सांसर्गिकावच्छेदकतासम्बन्धानवच्छिन्नाधर्म्मनिष्ठावच्छेदकतासम्बन्धावच्छिन्ना इति ॥ तथाच अत्र वह्नित्वेन संयोगेन घटो नास्तीति बुद्धिंप्रति तत्र वह्नित्वेन संयोगेनघटोस्तीतिबुद्धेः प्रतिबन्धकत्वमेतद्बुद्धिंप्रतितद्बुद्धेश्चैवंप्रतिबन्धकत्वं बोध्यम् । एवं समवायेन संयोग—संयोगाभावयोरपि, अव्याप्यवृत्तिमतोरपि बोध्यम् ॥ इति ॥

१ तिस्रो विधाः प्रकारसामान्यम् अस्येति त्रिविधस्तस्य भाव इति ष्यञ्प्रत्ययः ।

२ अजन्यत्वेसति विनाशित्वं प्रतियोगिनाश्याभावत्वं वा प्रागभावत्वम् ।

प्रतियोगिसमवायिकारणवृत्तिर्ध्वस्त इति व्यवहारहेतुर्ध्वंसः[1] । अत्यन्तं (त्रैकालिकः । नित्यः) अभावः अत्यन्ताभावः[2] । यो वस्तुसत्तायाः पूर्वमासीत्, पश्चादपि भविष्यति । इदानीं (वस्तुसत्ताकाले) सन्नपि स्वप्रत्यायक[3]सम्बन्धाभावान्नास्तीव भाति सः ॥ **अन्योन्याभावस्तु** अन्योन्यस्य परस्परस्य इतरेतरस्य वा योऽभावः[4] अन्योन्यनिष्ठप्रतियोगितानिरूपक इति तदर्थः । अयमेव भेदशब्देनोच्यते ॥ १२ १३/२ ॥

**इति अन्विताथदीपिकायां भाषापरिच्छेदव्याख्यायां पदार्थसामान्यनिरूपणं नाम प्रथमः परिच्छेदः ॥**

---

१ जन्यत्वे सत्यविनाशित्वं ध्वंसत्वम् ।

२ नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् । नित्यत्वं चाजन्यत्वे सत्यविनाशित्वम् । एतच्च ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसंवन्धो वर्तत इति मताभिप्रायेण विशेषणम् । अन्यथा भेदसंसर्गावच्छिन्नेत्युक्त्यैवान्योन्याभावादिवारणात्तद्व्यर्थमेव, यदि तु संसर्गावच्छिन्नेत्यादेरन्योन्याभावभिन्नाभावत्वमित्यर्थस्तदा तु नित्येति *सिद्धान्तेऽपि सार्थकमेव

३ स्वम् अभावः प्रत्यायकः प्रतीतिजनकः । स च तत्कालीन–(अभावप्रतीतिकालीन–) तद्भूतलादिरूपः ।

४ अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् आत्मन आत्मनि यः सम्बन्धः स तादात्म्यसम्बन्धः प्रतियोगिनो भावः प्रतियोगिता तादात्म्यसम्बन्धेनावच्छिन्ना †विशिष्टा तादात्म्यसम्बन्धावच्छिन्ना, तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता यस्य सः । अयमर्थः । सर्वत्र ज्ञाने कश्चिद्विशेष्यो भवति कश्चित्प्रकारः तत्र प्रकारस्य भावः (धर्मः) प्रकारता, प्रकारः येन सम्बन्धेन विशेष्ये स सम्बन्धः प्रकारतावच्छेदकः प्रकारता तत्सम्बन्धावच्छिन्ना, नञोऽसमभिव्याहारे यत्र ज्ञाने यः प्रकारतावच्छेदकः नञ्समभिव्याहारे स एव तत्र प्रतियोगितावच्छेदक इत्युच्यते, यथा नीलो घट इति ज्ञाने विरुद्धविभक्तिरहितनिपातातिरिक्तनामार्थयोरभेदान्वयनियमात्तादात्म्यसम्बन्धो नीलनिष्ठप्रकारतावच्छेदकः नीलो न घट इत्यत्र स एव (तादात्म्यसम्बन्धः) नीलनिष्ठप्रतियोगितावच्छेदकः प्रतियोगिता च तत्सम्बन्धावच्छिन्नेति भवति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः प्रथमान्तद्वयमध्यपतितनञ्पदजन्यप्रतीतिविषयोऽभावोऽन्योन्याभावः । एवमन्यत्राप्यूह्यम् ॥

अथ लक्षणज्ञानाय किंचिदुच्यतेऽग्रे साधर्म्यप्रकरणेन तस्यैव विशिष्य विवक्षित-

---

* ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसम्बन्धो नैवास्तीति सिद्धान्तमतेऽपि ।

† वैशिष्ट्यंच निरूपितत्वसम्बन्धेन सम्बन्धस्य प्रतियोगितानिरूपकत्वात् इति बोध्यम् ।

त्वात्, अत्र भाष्यम् । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति । तत्र नामधेयेन पदार्थमात्राभिधानमुद्देशः । तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम् । लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षेति, तत्त्वस्य गोत्वादेर्व्यवच्छेदकः व्यावर्तकः । इतरभेदानुमापक इति यावत् । तथाचोक्तं व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति, व्यावृत्तिरितरभेदानुमितिः । व्यवहारश्च गवादिबोधकगौरित्यादिशब्दप्रयोगः । तद्यथा सास्नादिमत्त्वं गोः । सास्ना तु गलकम्बलः । तेन च गवि व्यतिरेकव्याप्त्या गवेतरभेदानुमानं भवति । गौरितरभिन्ना सास्नादिमत्त्वाद्यन्न सास्नादिमन्न तद्गवेतरभिन्नं यथा महिषः । अयंच न *तथा तस्मान्न तथेति ॥ अव्याप्त्यतिव्याप्त्यसम्भवान्योन्याश्रयात्माश्रयादयो लक्षणदोषास्तै रहितो-धर्मोऽसाधारणस्तन्मात्रवृत्तिधर्म इत्युच्यते, स एव लक्षणं भवति, तत्राव्याप्तिर्नाम, लक्ष्यैकदेशावृत्तित्वम् लक्ष्यवृत्तित्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति तदर्थः । यथा गोः कपिलत्वलक्षणे, कपिलत्वं हि शबलेऽव्याप्तम् । अतिव्याप्तिर्नाम, लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । लक्ष्यतावच्छेदकसामानाधिरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमिति तदर्थः । यथा गोः शृङ्गित्वलक्षणे, शृङ्गित्वं हि महिषेऽतिव्याप्तम् । असम्भवो नाम, लक्ष्यमात्रे लक्षणागमनम्, लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमिति तदर्थः । यथा †गोरेकशफत्वे । अन्योन्याश्रयः इतरेतराश्रयः परस्पराश्रय इत्यनर्थान्तरम् ‡ । स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वमन्योन्याश्रयत्वम् । अस्यार्थः । स्वग्रहः स्वज्ञानम् तस्य सापेक्षोऽपेक्षाकारी यो ग्रहस्तस्य सापेक्षोऽपेक्षाकारी ग्रहो ज्ञानं यस्य तस्य भावस्तत्त्वम् इति, यथा महिषभिन्नत्वं गोत्वं, गोभिन्नत्वं च महिषत्वमित्येवं लक्षणे, गोत्वज्ञानाय महिषत्वज्ञानापेक्षा, महिषत्वज्ञानाय च गोत्वज्ञानापेक्षा, परस्परं स्वज्ञप्त्यधीनज्ञप्तिकत्वं तत्त्वमित्यपि केचित् ॥ अस्य चाप्रतिपत्तिकरत्वाज्ज्ञप्तावेव दोषत्वमित्येवमुक्तमुत्पत्तौ तु परस्परापेक्षत्वलक्षणोऽयमिष्ट एव, । आत्माश्रयत्वं च स्वापेक्षाऽऽपादकप्रसङ्गत्वम् । यथा ज्वरोपसर्गयुक्तो रोगो ज्वर इत्युक्तौ, ज्वराज्ञानवन्तमुद्दिश्य ज्वरे लक्षणीये ज्वरज्ञानापेक्षायां तदभावात्कथं ज्वरोपसर्गज्ञानं संभविष्यति, एषु पञ्चसु आद्यानां त्रयाणां क्रमेण भागासिद्धि-व्याप्यत्वासिद्धि-स्वरूपासिद्धि-रूपहेत्वाभासेष्वन्तर्भावादितरभेदानुमितिरूपलक्षणफलप्रतिबन्धकत्वाद्दोषत्वमूह्यम् अपरयोर्ज्ञप्ति( ज्ञान )प्रतिबन्धकत्वादेव दोषत्वमनुसन्धेयम् ॥ अत्रोद्देशस्य पक्षज्ञानं, लक्षणस्य च व्यावृत्तिर्व्यवहारो वा, परीक्षायाश्च लक्षणदोषपरिहारः फलमिति द्रष्टव्यम् ॥

* अयं गौः तथा सास्नादिमत्त्वाभाववान्न, तस्मात्सास्नादिमत्त्वाभावाभाव-(सास्नादि)-वत्त्वात्तथा इतरभेदाभाववान्न किंतु इतरभेदवान् ॥

† शफं क्लीबे खुरः पुमान् ॥

‡ न अर्थान्तरमेक एवार्थ इत्यर्थः ॥

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

अथ परस्परधर्मतापन्नानां सप्तपदार्थानामेव परस्परभेदकत्वं ज्ञापयितुं सामान्यतः पदार्थनिरूपणा[1]नन्तरं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुमुपक्रमते—सप्तानामित्यादिना । सप्तानां द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-भावानां समानो धर्मो येषां ते सधर्मा[2]णस्तेषां भावः साधर्म्यम् । समानो धर्म इति फलितोऽर्थः । ज्ञेयत्वमादि यस्य तत् । ज्ञेयत्वं ज्ञानविषय[3]ता, सा च सर्वत्रैवास्ति अन्ततः ईश्वरादिज्ञानविषयतायाः केव[4]लान्वयित्वात् । आदिना अभिधेय[5]त्व-प्रमेय[6]त्वादिकं बोध्यम् ॥ १३ ॥

**द्रव्यादयः पञ्च भावा अनेके समवायिनः ।**
**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

द्रव्यादयः पञ्च, द्रव्य-गुण-कर्म-सामान्य-विशेषा अनेके भावा अर्थादनेकत्वे सति भावत्वम् ( अनेकभाव[7]वृत्तिपदार्थविभाजकोपाधिमत्त्वम् ) पञ्चानां साधर्म्यम् । समवायवारणाय सत्यन्तम् अभाववारणाय भावत्वमिति ॥ समवाय एषामस्तीति समवायिनः मत्वर्थीय इन्प्रत्ययः ।

---

१ तदनिरूपणे तत्तत्पदार्थघटितस्य तत्तत्पदार्थस्य साधर्म्यतया निरूपणासम्भवादिति भावः ॥

२ भावप्रत्ययेन स्वप्रकृत्यर्थविशेषणीभूतो जात्यादिरूपोऽर्थ उच्यते, प्रकृतिजन्यबोधे प्रकारो हि भावः समानधर्मवति च समानधर्म एव प्रकारः । एवमन्यत्रोह्यम् ॥

३ आत्मविशेषगुणज्ञानाद्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययार्थो विषयता, विषयिता वा ॥

४ सर्वत्र सत्त्वात् । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ।

५ अभिधाविषयत्वम् अभिधा शक्तिः शक्तिश्चेदं पदममुमर्थं बोधयतु इत्याकारिका अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिका वा इच्छा ॥

६ प्रमेयत्वं—प्रमाविषयत्वम् प्रमा च यथार्थानुभवः ॥

७ एतच्च विवरणं प्रत्येकं घटादावाकाशादौ चाव्याप्तिवारणाय, समन्वयप्रकारश्चानेके ये भावा घटव्यक्तयस्तद्वृत्तिः पदार्थविभाजकोपाधिः ( पदार्थत्वसाक्षाद्व्याप्यधर्मः ) द्रव्यत्वं तद्वत्त्वं प्रत्येकं घटादौ वर्तत इति ॥

समवायित्वं समवायप्रतियोगित्वं (समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं) च पञ्चानां साधर्म्यमित्यर्थः।—आद्यास्त्रयः द्रव्यगुणकर्माणि सत्तावन्तः। समवायसम्बन्धेन सत्तावत्त्वं त्रयाणां साधर्म्यमित्यर्थः ।—गुणादिर्गुणकर्मसामान्यविशेषसमवायाभावः । स च निर्गुणक्रियः । गुणश्च क्रिया च गुणक्रिये निर्गते गुणक्रिये यस्मात्सः । निर्गुणत्वं गुणशून्यत्वं (गुणवदवृत्तिधर्मवत्त्वम् ।) निष्क्रियत्वं क्रियाशून्यत्वं (क्रियावदवृत्तिपदार्थविभाजकोपाधिमत्त्वं ) च गुणादेः साधर्म्यमित्यर्थः ॥ १४ ॥

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।**
**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥**

जातिः ( सामान्यम् ) आदिर्येषां ते—**जात्यादयः** सामान्यविशेषसमवायाभावाः सर्वेऽपि सामान्येन ( जात्या ) परिहीना रहिता मताः, सामान्यानधिकरणत्वं सामान्यादीनां साधर्म्यमित्यर्थः । अणोः परिमाणं **पारिमाण्डल्यं** पृषोदरादित्वात्साधुः । तस्माद्भिन्नानां सर्वेषामेव कारणत्वं साधर्म्यम् उदाहृतमुक्तम् । अत्र परिमाण्डल्येत्युपलक्षणं परममहत्त्वस्य, तस्यापि ज्ञानातिरिक्तं प्रत्यकारणत्वाभ्युपगमादत्र प्रमाणंच—"**कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य**" इत्यत्र भाष्ये आदिग्रहणात्परममहत्त्वं गृह्यत इति आचार्यवचनम् ॥ १५ ॥

---

१ एतच्च नित्यद्रव्येषु परमाण्वादिष्वव्याप्तिवारणाय विवृतम् ।

२ आदौ भवाः ।

३ गुण आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः ॥

४ एतच्च आद्यक्षणे घटादावतिव्याप्तिवारणाय, उत्पन्नं हि द्रव्यं क्षणमगुणं तिष्ठति, समवायेन गुणोत्पत्तिं प्रति तादात्म्येन द्रव्यस्य कारणत्वात्कारणस्य च कार्यपूर्ववृत्तित्वनियमात्, गुणवदवृत्तिश्च धर्मो न घटत्वं नापि द्रव्यत्वं किंतु गुणत्वादिकमेवेति तदादाय सर्वत्र लक्षणसमन्वयो बोध्यः ।

५ एतच्च गगनादावतिव्याप्तिवारणाय, गगनत्वादिकं हि न पदार्थविभाजकोपाधिः ।

६ विषयतासम्बन्धेन द्रव्यलौकिकप्रत्यक्षे समवायेन महत्त्वस्य कारणत्वादात्ममानसप्रत्यक्षे आत्मपरममहत्त्वस्य कारणत्वमावश्यकमिति, अत एवानुपदवक्ष्यमाणभाष्यमुपादाय "कारणत्वंच ज्ञातृधर्मेतरभावकार्यापेक्षयेति" व्याचख्युरुदयनाचार्याः । आत्मधर्मा ज्ञानादयस्तदतिरिक्तभावकार्यं प्रति कारणत्वं परिमाण्डल्यादिभिन्नानां साधर्म्यमिति तदर्थः ॥

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।**
**कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम्॥ १६॥**

ननु कारणत्वं किमत आह—**अन्यथासिद्धीति**॥ अन्यथासिद्ध्या वक्ष्यमाणरूपया शून्यस्य रहितस्य निष्ठत्वं षष्ठ्यर्थः। तथाचान्यथासिद्धिशून्यनिष्ठा या नियता (निश्चिता-अवश्यंभाविनी) पूर्ववर्तिता कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तिता तत्कारणत्वं भवेत्। तस्य कारणत्वस्य तिस्रो विधा अस्येति त्रिविधं तस्य भावस्त्रैविध्यं ब्राह्मणादित्वात्ष्यञ् त्रिविधत्वम् परिकीर्तितमुक्तम्॥ १६॥

**समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्।**
**एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्॥ १७॥**

एवममुना प्रकारेण न्यायनयं न्यायमतं जानन्तीति न्यायनयज्ञास्तैस्तृतीयं निमित्तहेतुत्वमुक्तम् स्पष्टमन्यत् (पूर्वार्द्धम्)॥ १७॥

**यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्।**
**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥ १८॥**

तत्राद्यस्य लक्षणमाह—**यदिति**। यस्मिन्समवेतं (समवायसम्बन्धेन वर्तमानं) सत्कार्यं भवति उत्पद्यते तत्तु समवायिजनकं ज्ञेयम्। समवायसम्बन्धावच्छिन्नकार्यतानिरूपित—तादात्म्यसम्बन्धावच्छिन्नकारणतावत्त्वं समवायिकारणत्वमिति निष्कर्षः। यथा घटं प्रति कपालः। पटं प्रति तन्तुः। यथा वा घटरूपादिकं प्रति घटः। पटरूपादिकं प्रति पट इत्येवम्॥ द्वितीयस्य लक्षणमाह—**तत्रेति**। तत्र समवायिका-

---

१ दण्डत्वादौ नियतपूर्ववृत्तितायाः सत्वादतिव्याप्तिरत उक्तमन्यथासिद्धिशून्यस्येति। तद्घटत्वावच्छिन्नं प्रत्यनन्यथासिद्धे तद्रासभेऽतिव्याप्तिवारणाय नियता पूर्ववर्तितेत्युक्तं नियतपूर्ववृत्तिजातीयतेति तदर्थस्तेनारण्यस्थदण्डादावपि स्वरूपयोग्यतासम्पत्तिः। तज्जातीयत्वं च नियतपूर्ववृत्तितावच्छेदकदण्डत्वादिमत्त्वमेवेति॥

२ विधेयप्राधान्यात्तदिति नपुंसकनिर्देशः। उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागिति महदुक्तेः॥ प्रतिनिर्देश्यः विधेयः॥

३ यत्कारणं कार्यरूपेण परिणतं भवति तत्समवायिकारणमिति परमार्थः।

४ कार्ये कार्यता कारणे कारणता तयोश्च साकाङ्क्षत्वात्परस्परं निरूप्यनिरूपकभावः सम्बन्धः। अन्यत्सर्वं संसर्गाभावलक्षणोक्तदिशाऽनुसन्धेयम्।

रणे आसन्नं सम्बद्धं समवाय-स्वसमवायिसमवेतत्वान्यतरसम्बन्धेनेत्यादिः, जनकं द्वितीयमसमवायिकारणं ज्ञेयम् ॥ तथाच समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-समवाय-स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नकारणतावत्त्वमसमवायिकारणत्वमिति निष्कर्षः । यथा घटं प्रति कपालसंयोगः । पटं प्रति तन्तुसंयोगः । यथा वा घटरूपादिकं प्रति कपालरूपादिकम् । पटरूपादिकं प्रति तन्तुरूपादिकमेवमन्यत्रापि बोध्यम् ॥ आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणं स्यादित्यर्थः ॥ यथा घटं प्रति दण्डादिकम् पटं प्रति तुरीवेमादिकम् ॥ १८ ॥

**येन सह पूर्वभावः कारणमादाय वा यस्य ।**
**अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥**

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानां तदाह—**येनेत्यादिना,**

---

१ यथा घटः समवायेन कपाले तत्र कपालसंयोगोऽपि गुणत्वात्समवायेनेति समवाय एव कार्यतावच्छेदकः कारणतावच्छेदकश्च, कपालरूपादेस्तु द्वितीयस्तत्र स्वं कपालरूपादिकं तत्समवायी कपालादिस्तत्समेवतत्वं घटादौ तत्र समवायेन रूपादिकार्यं वर्तत इति सामानाधिकरण्यमुपपन्नं भवति, एवमन्यत्रोह्यम् ॥

२ अत्रेदं बोध्यम् । तत्तत्कार्यं प्रत्यसमवायिकारणत्वं तत्तद्रूपेण भिन्नं तत्र यत्र यत्र असमवायिकारणत्वं नेष्टं तत्र तत्र तद्वारणाय तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयं यथा पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वमेवमन्यत्र, आत्मविशेषगुणानां ज्ञानादीनां तु कुत्राप्यसमवायिकारणत्वं नास्ति इति तद्भिन्नत्वं सामान्यलक्षणे देयमेव, तेन ज्ञानादीनामिच्छादिकं प्रति, परामर्शस्य चानुमितिं प्रति, नासमवायिकारणत्वमिति ।

३ अत्रेदं बोध्यम् । समवायिकारणासमवायिकारणभिन्नकारणत्वमेव निमित्तकारणत्वम् तेन तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्यासमवायिकारणत्वेऽपि न तस्य पटं प्रति निमित्तकारणत्वक्षतिरिति । तुरीसूत्रवेष्टिता नलिका ( तृणविशेषः ) वेमा वायदण्डः श्लक्ष्णतरो लौहनिर्मितो, यत्र तुरीं निधायोभयतः सूत्रसन्तानोपरिव्यापार्यते ॥

४ अन्यथासिद्धत्वंच नियतपूर्ववर्तितावच्छेदकयद्धर्मावच्छेदेन यादृशकार्यंप्रति नकारणत्वव्यवहारः प्रामाणिकानां तद्रूपावच्छिन्नत्वम् ।

यत् (यद्धर्मावच्छिन्नं) कार्यं प्रति यस्य (कारणत्वेनाभिमतस्य दण्डत्वादेः) पूर्वभावः पूर्ववर्तिता येन रूपेण ( येद्रूपावच्छेदेन ) सह गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धम्। इत्येकः। उदाहणमनुपदं स्फुटीकरिष्यते॥ द्वितीयमाह—**कारणमिति**। अत्र कारणपदं स्वतन्त्रान्वयव्यतिरेकशालिपरम्। तेन नात्माश्रयः। वाशब्द एवार्थे। आदायेत्यस्य गृहीत्वेत्यर्थः। यस्येत्यस्य स्वतन्त्रान्वयव्यतिरेकशून्यस्येत्यर्थः। इत्थंच यस्य कारणं स्वभिन्नतत्कार्यकारणमादायैव पूर्वभावः गृह्यते नतु स्वतः अर्थात् यस्य स्वातन्त्रेणान्वयव्यतिरेकौ न स्तः किंतु स्वभिन्नकारणं गृहीत्वैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्॥ तृतीयमाह—**अन्यमिति**।

---

१ मूले पूर्वभावइत्युक्तं तत्र कं प्रति, कस्येति चाकाङ्क्षाद्वयं जायते तत्क्रमेणाध्याहृत्य ( उत्तरवाक्यत आकृष्य ) पूरयति। यत्–प्रति, यस्येति च।

२ मूले यत्पदेन यद्रूपमुच्यते। अवच्छेदकत्वं तृतीयार्थः। प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम्। अवच्छेदकताबुद्धिप्रकारत्वादि शंसतीति हर्युक्तेः।

३ साहित्यंचैकज्ञानविषयत्वम्।

४ एतच्चोत्तरश्लोकस्थमत्रार्थवशादपकृष्यते। एवमुत्तरवाक्येष्वप्यनुकर्षापकर्षौ यथायथं बोध्यौ।

५ तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रत्यन्यथासिद्धत्वम् इति निष्कृष्टोऽर्थः। अत्र द्वितीयान्यथासिद्धवारणाय सत्यन्तम् कपालसंयोगो घटपूर्ववर्तीत्यादिग्रहे कपालस्यापि तादृशविशेष्यतावच्छेदकत्वात्तत्रातिव्याप्तिवारणाय विशेष्यदलम्।

६ कारणलक्षणे कारणस्य प्रवेशे हि स सम्भवति।

७ अन्वयः स्वाधिकरणे कार्यसत्त्वम्। व्यतिरेकः स्वाभावाधिकरणे कार्यासत्त्वम्। अनयोः स्वातन्त्र्यं च स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वम्। दण्डत्वदण्डरूपयोरन्वयव्यतिरेकौ स्वभिन्नदण्डरूपकारणान्वयव्यतिरेकप्रयुक्तौ स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वादिसत्त्वस्य दण्डसत्त्वाधीनत्वात् तयोरन्यथासिद्धत्वमिति भावः।

८ स्वातन्त्र्येण तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताकं यत् तत्कार्यं प्रत्यन्यथासिद्धमिति निष्कर्षः। कपालसंयोगो घटपूर्ववृत्तीत्यादिपूर्ववृत्तित्वग्रहविशेष्यतायाः कपालसंयोगनिष्ठायाः कपालावच्छिन्नत्वात्कपालसंयोगेऽतिव्याप्तिवारणाय सत्यन्तम्। दण्ड-

फलाननुगुणमित्यर्थः । तेन कुलालजनके चतुर्थान्यथासिद्ध्याश्रये नातिव्याप्तिः । यस्येति-वेति च पूर्ववाक्यादनुषज्येते, यस्यान्यं प्रति पूर्वभावे पूर्ववृत्तित्वे ज्ञात एव यत्पूर्वभावविज्ञानं तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् ॥ १९ ॥

**जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।**
**अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥**

चतुर्थमाह—**जनकमिति** । फलानुगुणमित्यर्थः ॥ यस्यजनकं (यत्कार्यजनकं) प्रति पूर्ववृत्तिताम् अपरिज्ञाय अगृहीत्वा न अपि तु गृहीत्वैव पूर्वभावः(यत्कार्यंप्रति पूर्ववृत्तित्वं)गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्[1] । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वनियमात् ॥ पञ्चममाह—**अतिरिक्तमिति** । अथ नियतः व्यापकः आवश्यकः यद्विना कार्यसिद्धिर्न स चासौ पूर्वभावी पूर्ववर्ती चेति त्रयाणां कर्मधारयौ समासौ । तस्मादतिरिक्तं यद्भवेत्तदप्यन्यथासिद्धम् । अत्र नियतेत्युक्त्या रासभस्य, आवश्यकेत्युक्त्याऽऽकाशस्य, पूर्वभाविन इत्युक्त्या स्वस्य[2] व्यावृत्तिरिति बोध्यम् । तथाचान्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणत्वं, कार्यनियतपूर्ववृत्तित्वं च कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । अथैवं नियतपदं व्यर्थमनियतरासभादेः सत्यन्तेनैव वारणादिति चेन्न । घटसामान्यं प्रत्यन्यथासिद्ध्यभावात् ॥ एतत्तत्त्वमभिनवप्रभायां[3] व्यक्तम् ॥ २० ॥

---

त्वादिवारणाय विशेष्यदलम् । अत्रेतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्ध्योः संग्रहेऽपि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् ।

१ अत्रापि अन्यं प्रतीत्याद्यभिधाने तृतीयचतुर्थान्यथासिद्ध्योः संग्रहेऽपि फलाननुगुणत्वतदनुगुणत्वयोर्विशेषणयोरुपादानेन तयोर्भेदेनाभिधाने प्रयोजनाभावस्तथापि शिष्यबुद्धिवैशद्याय तथोक्तमिति बोध्यम् ।

२ स्वव्यापकत्वस्य स्वस्मिन्नपि सत्वात् ।

३ इयञ्चैतट्टीकाकृत्कृतैव । मुद्रिताचसकृत्काश्यां हरिदासगुप्तेन ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ, दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥

उपसंहरति—एत इत्यादिना । घटादावेते पञ्चान्यथासिद्धास्तत्रादिमं दण्डत्वादिकम् । घटं प्रति दण्डस्य पूर्ववृत्तित्वं दण्डत्वेन रूपेण सहैव गृह्यते इति तद्रूपं ( दण्डत्वम् ) तत्रान्यथासिद्धम् ॥ दण्डरूपादि द्वितीयं, दण्डरूपस्य हि घटकारणं दण्डमादायैव पूर्ववृत्तित्वम् । रूपवद्दण्डस्य कारणत्वात् । न तु स्वतोऽतस्तत्तत्रान्यथासिद्धम् ॥ २१ ॥

तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

तृतीयं तु व्योमाकाशं भवेत् । शब्दसमवायिकारणत्वं हि आकाशत्वमतः शब्दंप्रति पूर्वभावे ज्ञाते एव घटपूर्वभावविज्ञानमिति तत्तत्रान्यथासिद्धम् ॥ कुलालजनकः अपरश्चतुर्थ इत्यर्थः । कुलालपितुर्हि[1] घटकार्यजनकं कुलालं प्रति पूर्ववर्तितामपरिज्ञाय ( अज्ञात्वा ) घटं प्रति पूर्ववर्तिता न गृह्यते (न ज्ञायते) अतस्स तत्रान्यथासिद्धः ॥ पञ्चमः रासभादिः । रासभो गर्दभः । यद्घटव्यक्तिं प्रति रासभस्य पूर्ववृत्तित्वमस्ति तत्रापि घटत्वावच्छिन्नं (यावद्घटं) प्रति सिद्धकारणभावै[2]र्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभस्तत्रान्यथासिद्धः ॥ एतेषु पञ्चस्वन्यथासिद्धेषु[3] असौ पञ्चमः आवश्यकः तेनैव परेषां चरितार्थत्वात् । तथाहि घटादौ दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्[4] ॥ २२ ॥

---

१ अस्य कुलालपितृत्वेनैव घटं प्रत्यन्यथासिद्धत्वम् । कुलालत्वेन घटजनकत्वं त्विष्टमेव ।

२ सिद्धः कारणभावः ( कारणत्वं ) येषां तैः ।

३ तल्लक्षणेषु इति बोध्यम् ।

४ इदमत्राकूतम् । कारणता तावत्सामान्यतो द्विविधा साधारणासाधारणभेदात्तत्र कार्यत्वावच्छिन्नकार्यतानिरूपितादिक्कालादृष्टेश्वरादिनिष्ठाऽऽद्या, कार्यत्वव्याप्यघटत्वा-

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥

साधर्म्यप्रसङ्गात्तदेव पुनराह—**समवायीत्यादिना** । समवायिकारणत्वमुक्तरूपं द्रव्यस्यैव साधर्म्यमिति विज्ञेयम् । अपिशब्दस्त्वर्थे, अथ असमवायिहेतुत्वं तु गुणकर्ममात्रवृत्ति ज्ञेयम् । अत्र मात्रशब्दोऽवधारणार्थो[1] गुणकर्मणोरेवासमवायिकारणत्वं साधर्म्यमित्यर्थः । तेनान्येषां तद्वैधर्म्यमिति फलति । यद्वा[2]ऽसमवायिकारणत्वमसवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तेन गुणत्वं कर्मत्वं चादाय सर्वत्र[3] लक्षणसमन्वयः॥२३॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥

इह सप्तपदार्थमध्ये नित्यद्रव्येभ्यः परमाण्वाकाशा[4]दिपञ्चकेभ्योऽन्यत्र तानि विहायेत्यर्थः । अनित्यद्रव्याणां गुणादीनाञ्च आश्रितत्वं

दितत्तद्धर्मावच्छिन्नकार्यतानिरूपिता कपालादिनिष्ठा द्वितीया, साऽपि द्विविधा समुदितविश्रान्ता प्रत्येकविश्रान्ता च तत्राद्या घटं प्रति दण्डादिनिष्ठा इयमेव दण्डादिन्यायेन कारणतेत्युच्यते, द्वितीया वह्निं प्रति तृणारणिमणिसंयोगनिष्ठा, इयमेव तृणारणिमणिन्यायेन कारणतेत्युच्यते । अत्र मूलोक्ता त्रिविधाऽपि कारणता जन्यभावमात्रं प्रति भवति, तत्रानुगतरूपेणासमवायिकारणनाशादेव भावकार्यनाशः । न तु समवायिकारणनाशात् । परमाणुनाशाभावेऽपि तत्संयोगरूपासमवायिकारणनाशेन द्व्यणुकनाशाभ्युपगमात् । निमित्तकारणनाशात्तु क्वचिदेव, यथा द्वित्वादिसंख्यानां परत्वाऽऽपरत्वयोश्चापेक्षाबुद्धिनाशान्नाशोऽत्रैव (१०८) (१२५) कारिकयोर्वक्ष्यते, अत्र विशेषोऽन्यत्र (मुक्तावलीप्रभायां) द्रष्टव्यः ॥

१ मात्रं कार्त्स्न्येऽवधारण इति कोशः ॥ कार्त्स्न्यार्थकत्वे तु ज्ञानादावव्याप्तिः स्यात् ॥

२ साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमित्यभिप्रेत्याह—यद्वेति ॥

३ ज्ञानादौ, अयं प्रकारोऽन्यत्रापि बोध्यः ॥

४ परमाणवश्च आकाशादिपञ्चकञ्चेतिद्वन्द्वः । पृथिव्यप्तेजोवायूनां परमाणवः आकाशादिपञ्चकञ्चेति नव नित्यद्रव्याणि ।

सर्वाधारतानियामककालिकविशेषणतादिसंबन्धातिरिक्तसंबन्धेन वृत्तित्वं साधर्म्यम्। नित्यद्रव्याणां तूक्तसंबन्धेनावृत्तित्वं साधर्म्यम्, कालिकविशेषणतया नित्यानामपि कालादौ वृत्तेः॥ एवं पदार्थसामान्यसाधर्म्यमुक्त्वेदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—**क्षित्यादीनामिति**। अत्र तुशब्दः द्रव्यातिरिक्तसाधारणसाधर्म्यप्रकरणव्यवच्छेदभेदसूचकः। गुणयोगिता समवायसंबन्धेन गुणवत्त्वम्॥ २४॥

**क्षितिर्जलं तथा तेजः पवनो मन एव च।**
**परापरत्वमूर्तत्वक्रियावेगाश्रया अमी॥ २५॥**

**क्षितिर्जलमिति**। पृथिव्यप्तेजोवायुमनसां परत्वादिमत्त्वं साधर्म्यमित्यर्थः॥ तत्र परत्वापरत्वे परापरव्यवहारासाधारणकारणे वक्ष्येते[3]। मूर्तत्वं च क्रियाजनकतावच्छेदको जातिविशेषः। अविभुवृत्तिपरिमाणवत्त्वं वा॥ २५॥

**कालखात्मदिशां सर्वगतत्वं परमं महत्।**
**क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि॥ २६॥**

**कालेति**। कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं[4] च साधर्म्यमित्यर्थः। क्षित्यादिपञ्च-क्षित्यप्तेजोवाय्वाकाशानि भूतानि-भूतपदवाच्यानि, भूतत्वं[5] क्षित्यादिपञ्चानां साधर्म्यमित्यर्थः॥

---

१ आदिना दैशिकविशेषणतापरिग्रहः। काले देशे च सर्वमेव विशेषणवृत्तितया, तयोः सर्वाधारत्वात्। तद्वारकोऽपि सम्बन्धः सर्वस्य सर्वत्र, स्वाधिकरणकालवृत्तित्वं स्वाधिकरणदेशवृत्तित्वमित्येवम्।

२ परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः॥ तेन यत्र घटादौ परत्वादि नोत्पन्नं तत्र नाव्याप्तिः॥ आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम्॥ तत्रैव सत्तामादायातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। द्रव्यत्वव्याप्यत्वं च द्रव्यत्वन्यूनवृत्तित्वं। तच द्रव्यत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपं न द्रव्यत्वे इति तदादायाकाशादावतिव्याप्तिर्नाशङ्कनीया।

३ गुणनिरूपणप्रकरणे।

४ परममहत्त्वत्वं जातिविशेषो मानसप्रत्यक्षसिद्धः॥ अपकर्षानाश्रयपरिमाणवत्त्वं वा।

५ भूतत्वं च वहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावच्छेदकधर्मवद्विशेषगुणवत्त्वमात्माऽवृत्तिविशेषगुणवत्त्वं वा॥ आद्यलक्षणस्थपदकृत्यं मुक्तावल्यादौ द्रष्टव्यमिह बालानामप्रतिपत्तिभिया न लिखितम्॥

तत्र चत्वारि—क्षित्यप्तेजोवायुरूपद्रव्याणि स्पर्शो विद्यते येषु तानि स्पर्शवन्ति, चतुर्णां (पृथिव्यप्तेजोवायूनां) स्पर्शवत्त्वं साधर्म्यमित्यर्थः ॥२६॥

**द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।**
**अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥**

**द्रव्यारम्भ इति** । चतुर्षु पृथिव्यप्तेजोवायुषु द्रव्यारम्भः स्यात् ॥ द्रव्यारम्भकत्वं (द्रव्यसमवायिकारणत्वं) चतुर्णां (पृथिव्यप्तेजोवायूनां) साधर्म्यमित्यर्थः ॥ अथ आकाशशरीरिणाम्-आकाशजीवात्मनाम् अव्याप्य वर्तत इत्यव्याप्यवृत्तिः, क्षणे भवः क्षणिकश्च, विशेषगुणो बुद्ध्यादिरिष्यते[1] अभिमतः[2] । तथा चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च तेषां साधर्म्यमित्यर्थः । अव्याप्यवृत्तित्वं च स्वाधिकरणवृत्त्यभावप्रतियोगित्वम् । अस्ति चाकाशे विशेषगुणः शब्दः, स हि यदा गृहावच्छिन्नाकाश उत्पद्यते तदा बाह्यावच्छिन्नाकाशे तदभावोऽप्यस्तीत्यव्याप्यवृत्तिः तद्वत्त्व चाकाश इति लक्षणसमन्वयः । जीवात्मनि च विशेषगुणो ज्ञानादिः सोऽप्यव्याप्यवृत्तिः । ज्ञानादिकं हि आत्मनि विभौ शरीरावच्छेदेनोत्पद्यते, घटाद्यवच्छेदेन तदभावोऽप्यस्तीत्यव्याप्यवृत्तिः तद्वत्त्वं च जीवात्मनीति लक्षणसमन्वयः ॥ क्षणिकत्वं च तृतीयक्षणवृत्त्यवृत्तिजातिमद्विशेषगुणवत्त्वम् । योग्य[3]विभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाश इति तथाभूतशब्दत्वजातिमच्छब्दमादायाकाशे लक्षणसमन्वयः । जीवात्मनि च द्वेषत्वादिकमादाय लक्षणसमन्वयो बोध्यः ॥ २७ ॥

**रूपद्रवत्वप्रत्यक्षयोगि[4] स्यात्प्रथमत्रिकम् ।**
**गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥**

**रूपेति** । प्रथमत्रिकम् । पृथिव्यप्तेजोरूपम् । रूपं च—द्रवत्वं च

---

१ बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ॥ इति (९०) वक्ष्यते ॥

२ अर्थात्तार्किकाणाम् ।

३ योग्यत्वं च प्रत्यक्षविषयतावच्छेदको धर्मः । धर्माधर्मभावनाख्यसंस्काराश्चायोग्या इति तेषां व्यवच्छेदः ॥

४ योगिनः प्रथमास्त्रय इति पाठ ऋजुः ॥

प्रत्यक्षं चेति द्वन्द्वस्तैर्युज्यन्त इत्यर्थे णिनिः। द्वन्द्वान्ते[1] इति न्यायेन योगीति प्रत्येकान्वयि। तथा च रूपयोगित्वं द्रवत्वयोगित्वं प्रत्यक्षयोगित्वं च पृथिव्यादित्रयाणां साधर्म्यमित्यर्थः॥ द्वे द्रव्ये पृथिव्यब्रूपे। गुरुणी गुरुत्ववती, रसवती च। तथा च गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीतेजसोः साधर्म्यमित्यर्थः॥ २८॥

**आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।**
**यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्॥ २९॥**

**आत्मान इति।** पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वं साधर्म्यमित्यर्थः। **यदुक्तमिति।** ज्ञेयत्वादिकं विहायेत्यादिः। ज्ञेयत्वादिकं हि न कस्यापि वैधर्म्यं केवलान्वयित्वात्[3]॥ २९॥

**स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः।**
**[4]स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः॥ ३०॥**

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश। दिक्कालयोः पञ्च षड़ेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च॥ १॥ इति प्राचीनश्लोकमनुसृत्य वायोस्तावद्गुणानाह—**स्पर्शादयोऽष्टाविति।** स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वान्यष्टौ वेगाख्यसंस्कारश्चेति नव वायोर्गुणा इत्यर्थः॥ तेजसो गुणानाह—**स्पर्शाद्यष्टाविति**॥ ३०॥

**स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्।**
**रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश॥ ३१॥**

अपां गुणानाह—**स्पर्शादयोऽष्टाविति**॥ ३१॥

**स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश।**
**बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा॥ ३२॥**

---

१ द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इति न्यायस्वरूपम्॥

२ योगोऽत्र संबन्धः स चाद्ययोः समवायरूपोऽन्ते च विषयतारूपः। योग्यतावशात्॥

३ अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्॥

४ "अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसीति" प्राचीनपुस्तकधृतपाठः॥

पृथिव्या गुणानाह—स्नेहहीना इति। एते अव्यवहितपूर्वोक्ताः स्नेहहीनाः स्नेहभिन्नाः। गन्धयुताः गन्धसहिताः॥ आत्मनो गुणानाह—बुद्ध्यादिषट्कमिति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः। संख्यादिपञ्चकम्। संख्यापरिमाणपृथक्त्वसंयोगविभागाः भावना तदाख्यः संस्कारः तथेत्युत्तरान्वयि॥ ३२॥

धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे॥ ३३॥

कालदिशोर्गुणानामैक्यादेकोक्त्यैवाह—संख्यादिपञ्चकमिति। आकाशस्य गुणानाह—शब्दश्चेति। ते-संख्यादयः पञ्च। खे-आकाशे। तथाचाकाशे-शब्दः संख्यादयश्च पञ्चैवं षड्गुणा इत्यर्थः॥ ३३॥

संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे॥ ३४॥

ईश्वरस्य गुणानाह—संख्यादीति। नव्यास्तु संख्याबुद्धीच्छाप्रयत्नसुखानीति पञ्चैवेश्वरस्य गुणा इत्याहुः॥ मनसो गुणानाह—परापरत्व इति। संख्याद्याः पञ्च। संख्यापरिमाणपृथक्त्वसंयोगविभागाः। वेगः। तदाख्यसंस्कारश्चेति षट्। मानसे मनसि। स्वार्थे प्रज्ञादित्वादण्॥

इति अन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां साधर्म्यवैधर्म्यनिरूपणं नाम द्वितीयः परिच्छेदः॥

---

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः॥ ३५॥

तत्रेति। तत्र—उक्तद्रव्येषु तेषां मध्ये गन्धहेतुः गन्धसमवायिकारणं

(समवायसंबन्धेन गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमती) क्षिति[1]: पृथिवीत्यर्थः। सा च शुक्ल-नील-पीतादिभेदेन (सप्तविध) नाना(जातीय)रूपवती मता ज्ञाता। तत्र-पृथिव्यां रसस्तु मधुरकटुकषायादिभेदेन षड्विधो वर्तते। गन्धस्तु सौरभाऽसौरभभेदेन द्विविधो मतः॥ ३५॥

**स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।**
**नित्यानित्या च, सा द्वेधा नित्या स्यादणुलक्षणा॥ ३६॥**

स्पर्श इति। तस्याः पृथिव्याः स्पर्शस्तु अनुष्णोऽव्यक्तोष्णः अशीतोऽव्यक्तशीतश्च स चासौ पाकजश्चेति कर्मधारयौ। इत्थं च नानारूपवत्त्वं, षड्विधरसवत्त्वं, पाकजे[2]स्पर्शवत्त्वं च पृथिव्या लक्षणमिति फलति। सा-पृथिवी द्वेधा-द्विप्रकारा नित्याऽनित्या चेत्यन्वयः। अणुलक्षणा परमा[3]णुरूपा नित्या[4] स्यात्। अत्राल्पत्वं नञो[5]ऽर्थः॥ ३६॥

**अनित्या तु तदन्या स्यात्सैवावयवयोगिनी।**
**सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा॥ ३७॥**

अनित्येति। तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाप्यनित्या कार्यरूपा स्यात्। सैवाऽनित्या पृथिव्येवावयवयोगिनी सावयवा। सा च कार्यरूपा पृथिवी त्रिधा त्रिप्रकारा भवेत् शरीरे-न्द्रिय-विषयभेदादित्यर्थः॥ ३७॥

---

१ तत्त्वं (तथाभूतजातिमत्त्वं) पृथिव्या लक्षणम्। समन्वयप्रकारश्च समवायसंबन्धेन गन्धवती उत्पत्तिद्वितीयादिक्षणे घटादिरूपा पृथिवी तद्वृत्तिर्द्रव्यत्वव्याप्या जातिः पृथिवीत्वरूपा तद्वत्त्वं सर्वत्र पृथिव्यामिति, एवमुत्तरत्र (जलादिलक्षणेषु) अपि गन्धपदस्थाने शीतस्पर्शादिपदं निःक्षिप्य लक्षणं कार्यं, इदानीं गन्ध इति प्रतीत्या कालिकविशेषणतासंवन्धेन कालेऽपि गन्धो वर्तत इति समवायसंबन्धेनेत्युक्तम्। द्रव्यत्वमादायातिप्रसङ्गवारणाय द्रव्यत्वव्याप्येति। व्याप्यत्वं चात्र स्वाधिकरणवृत्त्यभावप्रतियोगित्वरूपमतो न स्वव्याप्यत्वं स्वस्य, जलपृथिव्यन्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय जातीति, अन्यतरत्वं च, एतद्भिन्नत्वे सत्येतद्भिन्नो यस्तद्भिन्नत्वम्। भेदद्वयाभाववत्त्वं वा।

२ अनुष्णाशीतेत्युक्तिस्तु पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनायैव॥

३ जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठतमो भागः परमाणुः प्रकीर्तितः॥ जालं गवाक्षः॥

४ नित्यत्वं च भावत्वे सति ध्वंसाप्रतियोगित्वम्। ध्वंसवारणाय सत्यन्तम्॥

५ तथा चोक्तम्—"तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इति॥

**योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।**
**विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥**

**योनिजादीति** । देहं भोगायतनं ( यदवच्छिन्ने आत्मनि भोगः सुखदुःखान्यतरसाक्षात्कारो भवति तत् ) योनिजादि-योनिजमयोनिजं च भवेत् । तत्र योनेर्जातं योनिजं । तद्विविधं जरायुजमण्डजं च । तत्राद्यं मानुषादीनां द्वितीयं सर्पादीनाम् । अयोनिजमुक्तयोनिजभिन्नं स्वेदजो-द्भिज्जादिकम् । तत्र स्वेदाज्जाताः स्वेदजाः कृमिदंशाद्याः । उद्भिद्य(भूमिं) जाता उद्भिज्जास्तरुगुल्माद्याः । नारकिणां देवादीनां च शरीरमप्ययो-निजमदृष्टविशेषसहितेभ्योऽणुभ्यस्तदुत्पत्तेरभ्युपगमात् ॥ इन्द्रियं घ्राण-मेव लक्षणं स्वरूपं यस्य तत् । घ्राणेन्द्रियं पार्थिवमित्यर्थः ॥ विषय उपभो-गसाधनं स च द्व्यणुकादिर्ब्रह्माण्डान्तः ब्रह्माण्डपर्यन्तः उदाहृतोऽभिहितः ( उक्तः ) ॥ ३८ ॥

जलं निरूपयति—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र, द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

**वर्णः शुक्ल इति** । जले-शुक्लो वर्णः । अयं चाभास्वरो ग्राह्यः । भा-स्वरशुक्लरूपस्य तेजसि वक्ष्यमाणत्वात् । मधुरशीतलौ रसस्पर्शौ क्रमेण बोध्यौ । मधुरो रसः शीतलः स्पर्श इति यावत् । तत्र-जले स्नेहः । साव-धारणं सर्वं वाक्यमब्भक्षो वायुभक्ष इति न्यायेन शुक्ल एव वर्णः मधुर एव रसः शीतल एव स्पर्शः जल एव स्नेह इत्येवं बोध्यम् । द्रवत्वं तु सांसिद्धिकं स्वाभाविकमुदाहृतमुक्तमित्थं चाभास्वरशुक्लमात्ररूपवत्त्वं मधु-रमात्ररसवत्त्वं शीतमात्रस्पर्शवत्त्वं स्नेहवत्त्वं सांसिद्धिकद्रवत्ववत्त्वमित्येवं जलस्य लक्षणं बोध्यम् ॥ ३९ ॥

---

१ अत्र मानं तु "ब्रह्मणो मानसा मन्वादयः पुत्रा" इत्याद्या आगमा एव ॥

२ आत्मान्यत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम् ॥ आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमुत्पद्यत इति हि ज्ञानक्रमः । एतच्च लक्षणं लब्धनोयोगस्य ज्ञानकारणत्वमिति मूलोक्तमताभिप्रायेणेति बोध्यम् ॥

**नित्यतादि प्रथमवत्किंतु देहमयोनिजम्।**
**इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः॥ ४०॥**

**नित्यतादीति**। प्रथमस्येव प्रथमवत्। "तत्र तस्येवे"ति (पा. सू.) षष्ठ्यन्ताद्वतिः। पूर्वोक्तस्य पृथिवीरूपद्रव्यस्येवेत्यर्थः। तथाहि जलं द्विविधं नित्यमनित्यं च। परमाणुरूपं नित्यं द्व्यणुकादिरूपं सर्वमनित्यं सावयवं च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्॥ पृथिवीतो यो विशेषस्तमाह—**किंत्विति**। **अयोनिजमिति**। अयोनिजमेवेत्यर्थः। जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम्॥ इन्द्रियं रसनं रसनेन्द्रियं जलीयमित्यर्थः॥ विषयं दर्शयति—**सिन्धुरिति**। सिन्धुः समुद्रः। हिमं तुषारः। आदिना सरित्कासारकरकादिः सर्वो ग्राह्यः। सोऽस्य विषयो मत इष्ट इत्यर्थः॥ ४०॥

तेजो निरूपयति—

**स्पर्श उष्णः स्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।**
**नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत्॥ ४१॥**

**स्पर्श उष्ण इति**। तेजसस्तु स्पर्श उष्ण इत्थं चोष्णस्पर्शवत्त्वं तेजसो लक्षणं बोध्यमेवमुत्तरत्र। रूपं शुक्लं च तद्भास्वरं (प्रकाशकं) चेति शुक्लभास्वरं स्यात्। द्रवत्वं तु नैमित्तिकं निमित्तकृतमस्वाभाविकमिति यावत्। **नित्यतादि चेति**। चस्त्वर्थे। पूर्ववत् जलस्येवेत्यर्थः। तथाहि तेजो द्विविधं नित्यमनित्यं च। परमाणुरूपं नित्यं द्व्यणुकादिरूपं सर्वमनित्यं सावयवं च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्। तत्र शरीरमयोनिजमेव। तच्च सूर्यलोकादौ प्रसिद्धम्॥ ४१॥

**इन्द्रियं नयनं वह्निस्स्वर्णादिर्विषयो मतः।**

अत्र यो विशेषस्तमाह—**इन्द्रियमिति**। नयनं नेत्रम्। विषयं दर्शयति—**वह्निरिति**। वह्न्यादिरित्यर्थः। अनेन भौमो विषयो दर्शितः। स्वर्णादिरित्यनेनाकरजः। दिव्योदर्यौ अपि विद्युदादिजाठरानलौ तैजसौ विषयौ स्तः॥ तथाच भौम-दिव्यो-दर्याऽऽकरजभेदाच्चतुर्विधस्तेजसो विषय इत्यर्थः॥

वायुं निरूपयति—

**अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः॥ ४२॥**

---

१ सरित् नदी, कासारः सरः। करका वर्षोपलः। आदिपदात्कूपादिपरिग्रहः॥

अपाकज इति। पवने अपाकजः पाकजो न भवतीति पृथिवी-स्पर्शव्युदासः। अनुष्णाशीतोऽव्यक्तशीतोष्णो विजातीय[1] इति यावत्। स्पर्शो मत इष्टः। इत्थं चापाकजानुष्णाशीतस्पर्शवत्त्वं वायोर्लक्षणमुक्तं भवति ॥ ४२ ॥

**तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।**
**पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥**

तिर्यगिति। एष वायुस्तिर्यग्गमनवान्। एतत्सत्वे साधकयुक्तिमाह—ज्ञेय इति। स्पर्शादिः स्पर्श-शब्द-धृति-कम्पा लिङ्गमनुमापकं यस्य सः। विजातीयस्पर्शेन[2], विलक्षणशब्देन, तृणादीनां धृत्या, शाखादीनां कम्पेन च वायोरनुमानं[3] भवति। पूर्ववदिति। जलवदित्यर्थः। नित्यतादीत्यादिनाऽनित्यत्वपरिग्रहः। वायुर्द्विविधो नित्योऽनित्यश्च। परमाणुरूपो नित्यः द्व्यणुकादिरूपः सर्वोऽप्यनित्यः सावयवश्च। अनित्योऽपि त्रिविधः शरीरेन्द्रियविषयभेदात्। तत्र शरीरमयोनिजमेव पिशाचादीनाम्[4]। अत्र यो विशेषस्तमाह—देहव्यापीति। शरीरव्यापकं, स्पर्शग्राहकमिति शेषः। इन्द्रियं त्वक् ॥ ४३ ॥

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः।**

विषयं दर्शयति—प्राणादिरिति। आदिना अपानसमानोदानव्यानाः पञ्च[5] शारीराः (शरीरान्तःसंचारिणः) बाह्याश्च वृक्षादिकम्पनहेतवस्तत्रावधिर्महावायुः। अयं प्रलयकालिकः पुराणादिप्रसिद्धः। सर्वोऽपि वायवीयो विषयः ॥

---

१ पार्थिवजलीयस्पर्शाभ्यां विलक्षणः। इत्थं च जलादिस्पर्शव्युदासायानुष्णाशीत इतीत्युक्तं भवति।

२ अत्र सर्वत्र तृतीयार्थो विशेष्यत्वं तस्य चानुमाने निरूपकतासंबन्धेनान्वयः। विजातीयस्पर्शादिनिष्ठविशेष्यतानिरूपकमनुमानं भवतीत्यर्थः।

३ अनुमितिप्रकारस्तु योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्। इत्येवम्। यत्र चाश्रितः सएव वायुः ॥

४ इदं तु बोध्यम्। जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगसाधनत्वम्। जलादीनां प्राधान्याज्जलीयत्वादिकमिति।

५ तत्र "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ॥" इति कोशोक्तस्थानरूपोपाधिवशान्मुखनिर्गमनादिक्रियारूपोपाधिवशाद्वैकस्यैव प्राणस्य पञ्च भेदा भवन्ति।

आकाशं निरूपयति—

**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥**

**आकाशस्येति**। विशेष एव वैशेषिकः। विनयादित्वात्स्वार्थे ठक्। शब्दः शब्द एवेत्यर्थः। इत्थं च शब्दगुणकत्व[1]माकाशस्य लक्षणम्। वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय[2] ॥ ४४ ॥

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः।**

आकाशे शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—**इन्द्रियं त्विति**। आकाशस्य इन्द्रियं तु श्रोत्रं (श्रूयतेऽनेनेति शृणोतेः करणे ष्ट्रन्) श्रोत्रनामकं भवेत् ॥ नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं तत्कथमाकाशं स्यादत आह—**एकः सन्नपीत्यादि**। आकाश एक एव सन्नप्युपाधित उपाधेः (सार्वविभक्तिक"आद्यादिभ्यश्चे"ति षष्ठ्यन्तात्तसिः) कर्णशष्कुल्यादेर्[3]भेदाद्भिन्न इति शेषः। श्रोत्रात्मको भवतीत्यर्थः ॥

कालं निरूपयति—

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥**

**जन्यानां जनक इति**। कार्यत्वावच्छिन्नं(यावत्कार्यं)प्रति निमित्तकारणमित्यर्थः[4]। कालसत्वे प्रमाणं दर्शयति—**जगतामिति**। कालः सर्ववानिति प्रतीत्या सर्वाधिकरणत्वेन कालसिद्धिरिति भावः ॥ ४५ ॥

**परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः।**

---

१ शब्दो गुणो यस्मिन्स शब्दगुणकस्तस्य भावस्तत्त्वं। समवायसंबन्धेन शब्दाधिकरणत्वमित्यर्थः। ननु तेन संबन्धेन शब्दवत्त्वं शब्दस्य तत्र सर्वदोपलब्ध्यभावान्नित्य-*योग एव तादृशार्थसंभवात् ॥

२ व्यवच्छेदोऽभावबोधनम् ॥

३ शष्कुलीव कर्णः कर्णशष्कुली शष्कुली पूरिका प्रोक्ता। कर्णशष्कुलीविवरावच्छिन्नाकाशः श्रोत्रमित्यर्थः।

४ तथाच कालिक(विशेषणता)संबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नाधिकरणतया† निमित्तत्वं (कारणत्वं) कालस्य लक्षणम्। कालिकसंबन्धावच्छिन्नेतिकरणाद्दिशि, अधिकरणतयेति करणाददृष्टादौ च नातिव्याप्तिः ॥

* 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति नित्ययोगेऽत्र मतुब्बोध्यः।

† अभेदस्तृतीयार्थः। धान्येन धनवानितिवत् प्रकृत्यादित्वाद्धि तृतीया। यथोक्तं हरिणा 'प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम्। अवच्छेदकता बुद्धिप्रकारत्वादि शंसती'ति ॥

अत्रैवं प्रमाणान्तरं दर्शयति—**परापरत्वेति** । परत्वापरत्वबुद्धेरसाधारणं[3] निमित्तं काल एव । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—**क्षणादिरिति** । कालस्त्वेकोऽप्युपाधित उपाधेर्भेदात्क्षणादिः तद्व्यवहारविषयः स्यादित्यर्थः[4] ॥

दिशं निरूपयति—

**दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥**

**दूरान्तिकादीति** । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं च क्रमेण बोध्यम् । तद्बुद्धेरसाधारणं[5] बीजं दिगेव ॥ ४६ ॥

**उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।**

नन्वेकैव दिग्यदि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह—**उपाधीति** । एकापि दिक् उपाधेर्भेदात् प्राच्यादिव्यपदेशं भजतीति भजो ण्विः । प्राच्यादिबोधकशब्दप्रयोगविषयो भवतीत्यर्थः । वस्तुतो दिश एकत्वेऽपि तत्तदुपाधिभेदेन[6] प्राच्यादिसंज्ञाभेद इति भावः ।

---

१ कालसत्व एव ।

२ ज्येष्ठे परत्वप्रत्ययः । कनिष्ठेऽपरत्वप्रत्ययः । स च परत्वापरत्वगुणविशेषाधीनः । परत्वापरत्वे च सासमवायिकारणके भावकार्यत्वाद्घटवत् । असमवायिकारणं च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया कालसिद्धिर्बोध्या ॥

३ असाधारणत्वं च कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्त्वमित्युक्तं प्राक् ।

४ उपाधिस्तु लौकिकक्षणादौ कोशोक्तो निमेषादिरूपः‡ । शास्त्रीये तु मुक्तावल्युक्तः क्रियाजन्यविभागप्रागभावावच्छिन्नकर्मादिरूपस्तत एव बोध्यः ॥

५ दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया काल इव दिशोऽपि सिद्धिर्बोध्या ॥ लक्षणं तु दैशिक(विशेषणता)संबन्धावच्छिन्नेत्यादि काललक्षणवदूह्यम् ॥

६ यदपेक्षयोदयगिरिसन्निहितं यन्मूर्तं-तन्मूर्तावच्छिन्ना महती दिक् ततः प्राची । तदपेक्षयोदयगिरिसन्निहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम् । एवं यदपेक्षयोदयगिरिव्यवहितं यन्मूर्तं—तन्मूर्तावच्छिन्ना महती दिक् ततः प्रतीची । एवं यदपेक्षया सुमेरुसन्निहितं यन्मूर्तं—तन्मूर्तावच्छिन्ना महती दिक् तत उदीची, व्यवहितं त्ववाचीत्येवं स्वयमूह्यम् ॥ "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति" हि नियमः ॥

---

‡ अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला । तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशाऽस्त्रियाम् ॥ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च । पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभावित्यादि ॥

आत्मानं निरूपयति—

**आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥**

**आत्मेति** । इन्द्रियादीनामधिष्ठातेति षष्ठीतत्पुरुषः । निष्ठत्वं षष्ठ्यर्थः । अधिष्ठाता परम्परया ( जनकतासंबन्धेन अवच्छेदकतासंबन्धेन वा ) ज्ञानवत्त्वसंपादकः । आत्मा । इन्द्रियादीत्यादिना शरीरम् । अत्र प्रमाणमाह—**करणमिति** । हि यतः । अयं भावः । यथा कुठारादीनां छेदनादिकरणानां कर्तारं विना फलाजनकत्वं दृष्टम् । एवं चक्षुरादीनां ज्ञानकरणानां फलजनकत्वमपि कर्तारं विना नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यत इति ॥ ४७ ॥

**शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।**
**तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥**

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—**शरीरस्येति** । ननु चक्षुरादीनामेव ज्ञानादौ करणत्वं कर्तृत्वं चास्तु तयोर्विरोधे ( विभिन्नाधिकरणवृत्तित्वे ) साधकाभावादत आह—**तथात्वमिति** । चैतन्यमित्यर्थः । उपघाते नाशे सति । अर्थाच्चक्षुरादीनामेव । **कथमिति** । पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात् । अनुभवकर्तुरभावात् । अन्यदृष्टस्यान्येन स्मरणासंभवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥ ४८ ॥

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।**
**धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥**

ननु चक्षुरादीनां नश्वराणां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—**मनोऽपीति** । न तथा न चेतनम् । **ज्ञानादीति** । तदा मनसश्चैतन्येऽभ्युपगते ज्ञानादीनामनध्यक्षं प्रत्यक्षाभावो भवेत् । अ-

---

१ इत्थंचेन्द्रियाद्यधिष्ठातृत्वमात्मनो लक्षणम् । अचेतनं चेतनाधिष्ठितं सत्कार्यं करोतीति व्याप्तेः । इन्द्रियाणि शरीरं च ज्ञात्रधिष्ठितमचेतनत्वे सति उक्तान्यतरसंबन्धेन ज्ञानवत्त्वाद्वास्यादिवदित्यनुमानमात्मनि प्रमाणमित्येतेन प्रदर्शितं भवति ॥

२ समवायोऽत्राधिकरणतानियामकः । विषयता च कार्यतावच्छेदकः कारणतावच्छेदकश्च संवन्धः ॥

यमर्थः । मनसोऽणुत्वात् प्रत्यक्षे च महत्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरिति ॥ मनसो यथाणुत्वं तथाग्रे ( मनोनिरूपणे ) वक्ष्यते । **धर्माधर्माश्रय इति** । आत्मेत्यनुषज्यते । अयमात्मा धर्माधर्माश्रयः । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तिः ॥ विशेषगुणानां ज्ञानसुखादीनां योगतः संबन्धात्समवायरूपात् अध्यक्षः मानसप्रत्यक्षविषयः । योग्यविशेषणगुणसंबन्धेनैवात्मनः अहं ज्ञानवानहं सुखीत्यादि मानसप्रत्यक्षं भवति न त्वन्यथेति भावः ॥ ४९ ॥

**प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।**
**अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥**

**प्रवृत्तीति** । अयमात्मा परदेहादौ प्रवृत्त्यादिना[1] अनुमेयः अनुमातुं शक्यः । अत्र दृष्टान्तमाह—**रथेति** । तथा च शरीरमिदं चेतनाधिष्ठितं प्रवृत्तिमत्त्वाद्रथवत् इत्यनुमानं फलितम् । **अहंकारस्येति** । अहंकारोऽहमिति प्रत्ययस्तस्याश्रयो विषयोऽयमात्मैव, न देहादिः । **मन इति** । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तराऽयोग्यत्वात् ॥ ५० ॥

**विभुर्बुद्ध्यादिगुणवान्—**

**विभुरिति** । विभुत्वं च परममहत्परिमाणवत्त्वं तच्च पूर्वमुक्तमपि[2] स्पष्टाऽर्थमुक्तम्—**बुद्ध्यादीत्यादिना** । सुखदुःखेच्छादयश्चतुर्दश गुणाः पूर्वमुक्ता[3] वेदितव्याः ॥

इति अन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायामात्मनिरूपणं नाम तृतीयः परिच्छेदः ॥

---

१ प्रवृत्तिरत्र चेष्टा रथादौ तु व्यापार एव । चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवान् पराऽऽत्माप्यनुमीयते ॥

२ साधर्म्यप्रकरणे कालखात्मदिशामित्यादिना ॥

३ बुद्ध्यादिषट्ककमित्यादिना ॥

अत्रैव प्रसङ्गाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति—

**बुद्धिस्तु द्विविधा मता।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥**

**बुद्धिस्त्विति**। द्वैविध्यं व्युत्पादयति—**अनुभूतिरिति**। अनुभवोऽनुभूतिः। स्मरणं स्मृतिः। **चतुर्विधेति**। एतासां चतसृणां करणानि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति सूत्रोक्तानि वेदितव्यानि। तत्र प्रतिगतं प्रतिगमकं वाऽक्षमिन्द्रियमिति व्युत्पत्त्या सिद्धप्रत्यक्षशब्दः प्रत्यक्षप्रमितिकरणमिन्द्रियं बोधयति, अनुमानशब्दस्त्वनुमितिकरणम्। तच्च व्याप्यत्वेन ज्ञायमानं लिङ्गं व्याप्तिप्रकारकलिङ्गज्ञानं वा, उपमानमुपमितेः करणम्। तच्च सादृश्यज्ञानम्। शब्दस्तु शब्द्यते प्रतिपद्यतेऽर्थोऽनेनेति व्युत्पत्त्या शब्दप्रमितेः करणम्। तच्चाप्तोच्चारिता[1]काङ्क्षादिमत्पदसमूहरूपम् ॥ ५१ ॥

**प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।**
**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥**

चातुर्विध्यं व्युत्पादयति—**प्रत्यक्षमिति**। तच्चेन्द्रियार्थसंनिकर्षोत्पन्नं,[2] ज्ञानाकरणकं,[3] वा ज्ञानम्। व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। पदज्ञानकरणकं ज्ञानं शब्दजं (शाब्दबोधः)। तत्र प्रत्यक्षभेदानाह—**घ्राणजादीति**। घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् ॥ ५२ ॥

**घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।**
**तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥**

अथ येषामिन्द्रियाणां यद्ग्रहणे सामर्थ्यं तत्पृथक् दर्शयति—

---

१ आप्तस्तु वाक्यार्थगोचरयथार्थज्ञानयुक्तः ॥

२ इन्द्रियाणामर्थेन सह यः संनिकर्षस्तेनोत्पन्नं ज्ञानमित्यर्थः। समन्वयप्रकारश्च, इन्द्रियाणां चक्षुरादीनामर्थेन घटादिना सह यः संनिकर्षः संयोगादिस्तेनोत्पन्नमयं घट इत्यादिज्ञानं प्रत्यक्षमिति ॥

३ पूर्वोक्तलक्षणमीश्वरप्रत्यक्षस्याजन्यत्वात्तत्साधारणं न भवतीति लक्षणान्तरमुक्तम्। ततश्च अनुमित्यादिज्ञानानां ज्ञानकरणकत्वादिन्द्रियकरणके प्रत्यक्षे ज्ञानाकरणकत्वं सुघटमेवेति स्थितम् ॥

घ्राणस्येति। गोचरो ग्राह्यः। गन्धत्वादिरित्यादिना[1]—तद्व्याप्यसुरभित्वासुरभित्वे, गन्धाभावश्च गृह्यते। "येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तन्निष्ठाजातिस्तदभावश्च गृह्यत" इति न्यायात्। रसः रसत्वादिसहितः। रसज्ञायाः रसनेन्द्रियस्य। तथा गोचरः। गन्धोरसश्चोद्भूतोऽत्र ग्राह्यः। शब्दोऽपि शब्दत्वादिसहितः। श्रुतेः श्रोत्रेन्द्रियस्य। तथा गोचरः॥ ५३॥

**उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।**
**विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्॥ ५४॥**

उद्भूतरूपमिति। तेन[2] ग्रीष्मोष्मादा[3]वनुद्भूतं रूपमिति न त[4]त्प्रत्यक्षम्। तद्वन्ति। उद्भूतरूपवन्ति। नयनस्य गोचरा इति वचनव्यत्ययेनान्वयः। गोचरशब्दो नित्यपुंलिङ्गः। पृथक्त्वसंख्यादिकं योग्यवृत्तितया ग्राह्यम्। तेन परमाण्वादिगतपृथक्त्वादीनां न चाक्षुषत्वम्॥५४॥

**क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः।**
**गृह्णाति चक्षुःसंबन्धादालोकोद्भूतरूपयोः॥ ५५॥**

योग्यवृत्तिः। प्रत्यक्षेत्यादिः। तादृशः योग्यवृत्तिः। नयनस्य गोचर इतिपूर्वेणान्वयः। चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति। तथाच आलोकसंयोगः[5] उ[6]द्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम्। तत्र द्रव्यचाक्षुषं प्रति त[7]योः समवायसंबन्धेन कारणत्वं, द्रव्यसमवेतचाक्षुषं प्रति स्वाश्रयसमवायसंबन्धेन, द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेतिध्येयम्॥ ५५॥

---

१ गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातेरपि प्रत्यक्षं गन्धाश्रयस्य पुष्पादेर्ग्रहणे तु घ्राणस्य न सामर्थ्यमिन्द्रियाणां योग्यविषयावभासकलनियमात् इति बोध्यम्॥

२ रूपे उद्भूतेति विशेषणदानेन॥

३ आदिना चूर्ण(गट्टी)प्रविष्टतेजःपरिग्रहः॥

४ नोष्मादिगतरूपप्रत्यक्षम्॥

५ तेनान्धकारे न चाक्षुषम्।

६ तेन पिशाचस्य न चाक्षुषम्।

७ आलोकसंयोगोद्भूतरूपयोः॥

**उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।**
**रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥**

**उद्भूतेति** । उद्भूतस्पर्शवद्द्रव्यं त्वचोगोचरः । सोऽपि उद्भूतस्पर्शोऽपि । स्पर्शत्वादिसहित इत्यपि बोध्यम् । **रूपान्यदिति** । रूपभिन्नं रूपत्वादिभिन्नं च यच्चक्षुषोयोग्यं (प्रत्यक्षयोग्यं) तत्त्वगिन्द्रियस्यापि ग्राह्यम् । तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियादयश्च योग्यवृत्तयस्ते सर्वेऽपि त्वचो ग्राह्या इति ध्येयम् । **अत्रापि**—त्वगिन्द्रियजन्येऽपि द्रव्याध्यक्षे इत्युत्तरेणान्वयः । **रूपं** कारणम् । तथाच बहिरिन्द्रियजन्यमूर्तद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपं कारणं तेन वायुर्न प्रत्यक्ष इति बोध्यम् ॥ ५६ ॥

**द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् ।**
**मनोग्राह्यं सुखं दुःखमिच्छाद्वेषो मतिः कृतिः ॥ ५७ ॥**

मनसा सह त्वचोयोगो ज्ञाने जन्यज्ञानसामान्ये कारणम्[1] । **मनोग्राह्यमिति** । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानं । कृतिः प्रयत्नः । एवम् (उक्तन्यायेन) सुखत्वादिकमपि मनोग्राह्यम् । एवमात्माऽपि मनोग्राह्यः किंतु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।**
**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥**

एवमिन्द्रियगोचरं प्रत्यक्षमुक्त्वेन्द्रियागोचरं तदाह—**ज्ञानं यदिति** । निर्गतो विकल्पः प्रकारतादिकृतोभेदो यस्मात्तत्तथाभूतं यज्ज्ञानं तदिन्द्रियाण्यतिक्रम्य वर्तत इत्यतीन्द्रियम्[2] । इन्द्रियागोचरः । इष्यते । नैयायिकैरिति शेषः । एतत्स्वरूपमग्रे (गुणनिरूपणे) वक्ष्यते । **षड्विधे**

---

१ अत्र प्रमाणंतु सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति नाड्यां वर्तमानेन मनसा ज्ञानाजननम् ॥

२ निरूपकतासम्बन्धेन प्रकारतादिशून्यं *तुरीय(चतुर्थ)विषयतानिरूपकं ज्ञानं निर्विकल्पकम् ॥

---

* विशेष्यविशेषणसम्बन्धत्रितयातिरिक्तविषयतानिरूपकम् । अयंभावः । निर्विकल्पकज्ञानस्य केवलविषयत्वेन विषयावगाहित्वं न पुनर्विशेष्यत्वादिरूपेण घट घटत्व इति विशक[lit]लिततया तयोस्तद्विषयत्वानुभवादिति ॥

उक्तरूपे प्रत्यक्षे । **महत्त्वं हेतुः** । कारणं, तत्र द्रव्यप्रत्यक्षे समवायसंबन्धेन, द्रव्यसमवेतप्रत्यक्षे स्वाश्रयसमवायेनेत्येवम् । इन्द्रियमित्यत्र षड्विध इत्यनुषज्यते, षड्विधे प्रत्यक्षे इन्द्रियं करणम् । असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् व्यापारश्च संनिकर्ष एव न तु तज्जन्यत्वे सति तज्जन्यजनकत्वरूपस्तस्य श्रोत्रसंबन्धे समवायेऽभावात्[1] । **केचित्तु**—श्रोत्रमनःसंयोगस्य शब्दस्यैव[2] वा व्यापारत्वमूरीकृत्य जन्यत्वघटितव्यापारत्वस्याभ्युपगमेऽपि न क्षतिरित्याहुः । **अन्ये तु**—व्यापारवदसाधारणं कारणम् करणम् । असाधारणत्वं च यद्विलम्बात्प्रकृतकार्यानुत्पादस्त(त्कारण)त्त्वम्[3] । व्यापारत्वंच जन्यत्वघटितमेवेत्याहुः॥५८॥

अथ करणलक्षणस्य व्यापारघटितत्वस्फोरणाय करणमुक्त्वा तद्व्यापारमाह—

**विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।**
**द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥**
**द्रव्येषु समवेतानां तथा तत्समवायतः ।**
**तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥**

**विषयेति** । व्यापारः सन्निकर्षः । षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति—**द्रव्यग्रहस्तुसंयोगादिति** । तथाच द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयोगजन्यमित्यर्थः[4] । एवमुत्तरत्राप्यूह्यम् । द्रव्येषु समवेतानां(रूपादीनां)संयुक्तसमवायतः प्रत्यक्षं भवति, इन्द्रियसंयु-

---

१ वस्तुतस्तु श्रोत्रप्रतियोगिकत्वविशिष्टसमवायस्यैव तत्र व्यापारत्वं, व्यापारलक्षणे तज्जन्यत्वं च तत्सत्ताधीनसत्ताकत्वम् । भवति च तत्तादृशसमवायस्याकाशात्मकश्रोत्रसत्ताधीनसत्ताकत्वात् । व्यापारेण व्यापारिणो नान्यथासिद्धिरिति नियमादिन्द्रियस्य कारणत्वाक्षतिरुपपादनीया, यतोहि-कार्यनियतपूर्ववृत्ति स्व-स्वव्यापारान्यतरकत्वं कारणत्वमिति निष्कर्षः ।

२ शब्दस्य व्यापारत्वं विषयविधया बोध्यम् । विषयतासंबन्धेन प्रत्यक्षे तादात्म्यसंबन्धेन विषयस्य हेतुत्वात् ॥

३ तेन दिक्कालादृष्टात्मसु तादृशकारणत्वाभावान्नातिव्याप्तिः । व्यापारवत्त्वनिवेशाच्च घटचक्षुःसंयोगादौ नातिव्याप्तिः ॥

४ चाक्षुषं प्रत्यक्षं चक्षुःसंयोगजन्यं, त्वचाप्रत्यक्षं त्वक्संयोगजन्यमित्येवं सर्वत्रापि विशिष्यैव कार्यकारणभाव ऊह्यः ॥

क्तेषु घटादिषु रूपादीनां समवायात् तथा-उक्तवत् तत्रापि-(रूपादावपि) **समवेतानां** (रूपत्वादीनां) **तत्समवायतः** (संयुक्तसमवेतसमवयतः) प्रत्यक्षं भवति, इन्द्रियसंयुक्ते घटादौ रूपादिकं समवेतं, तत्ररूपत्वादेःसमवायात् । **शब्दस्य समवायतः** प्रत्यक्षं भवति कर्णविवरवृत्त्याकाशस्य-श्रोत्रत्वात् शब्दस्यचाकाशगुणत्वाद् गुणगुणिनोश्चसमवायात् ॥५९॥६०॥

**तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।**
**प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥**
**विशेषणतया तद्वदभावानां ग्रहो भवेत् ।**
**यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥**

**तद्वृत्तीनामिति** । शब्दवृत्तीनां शब्दत्वादीनान्वित्यर्थः । **समवेतसमवायेन** । **ग्रहः** ज्ञानम् । श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायात् । **समवायस्य प्रत्यक्षं विशेषणतया** ( इन्द्रियसम्बद्धविशेषणता सम्बन्धेन) **भवेत्** । एतच्च न्यायमतेनोक्तम् । वैशेषिकमतेतु समवायो न प्रत्यक्षः । **तद्वत्**-समवायवत् । **यदि** [1]**स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते** तत्र **विशेषणतया** (इन्द्रियसंबद्धविशेषणतासम्बन्धेन) **अभावानां ग्रहो** ज्ञानं (प्रत्यक्षं) **भवेत्** । घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते घटे घटाभावस्य विशेषणत्वात् । एतच्चोपलक्षणम् । भूतले घटाभाव इत्यत्र घटाभावस्य विशेष्यत्वं द्रष्टव्यं, तथाच विशेषणविशेष्यभावस्सन्निकर्षः विषयतात्वेनानुगतीकृत एक एव विशेषणतापदेनात्रोच्यते । **अत्रेदमवधेयम्** । विशेष-

---

१ यदि संयोगेन भूतले घटः स्यात्तदा तेन सम्बन्धेन तत्रोपलभ्येत इत्येवं यत्र आलोकसंयोगादिसहितस्थले प्रसज्यते आपादयितुं शक्यते तत्र, तेनान्धकारे न घटाभावादेश्चाक्षुषं प्रत्यक्षं स्पार्शनं तु भवत्येवालोकसंयोगं विनापि तस्यापादयितुं शक्यत्वात् । अयं भावः । अभावप्रत्यक्षे प्रतियोग्युपलम्भाभावः कारणं तत्र(प्रतियोग्युपलम्भाभावे)योग्यताऽ*प्यपेक्षिता, तत्र संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यता अपेक्षिता । तेन स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव स्तम्भोऽयं न पिशाच इति । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वादिति दिक् ॥

---

* प्रतियोगिसत्त्वापादनापादितोपलम्भप्रतियोगिकत्वरूपा । सा च यद्यत्र घटः स्यात्तद उपलभ्येतेत्येवंरूपोक्ता मूले एव ॥ अक्षरार्थस्तु प्रतियोगिनो घटादेः सत्वापादनेनापादि उपलम्भरूपी प्रतियोगी यस्य स तस्याभावस्तत्त्वमिति ॥

णतानां संयुक्तविशेषणतात्वादिरूपेण बहुविधत्वेऽपि विशेषणतात्वेनैव परिगणनान्न षड्विधत्वव्याघातः । नचैवं समवायत्वेनैव संयुक्तसमवायादीनामप्यनुगमः कुतो न कृत इति वाच्यम् । स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति ॥ ६१ ॥ ६२ ॥

प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधं । तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षा वर्णिताः । अलौकिक सन्निकर्षानिदानीं वदति—

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥**

**अलौकिकइति** । व्यापारः सन्निकर्षः[1] । **सामान्यलक्षण इति** । सामान्यं लक्षणं स्वरूपं यस्य स सामान्यस्वरूप इत्यर्थः । एवमुत्तरत्र । सामान्यं च इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम् । तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं तत्र ज्ञाने धूमत्वं प्रकारो धूमत्वेन च सन्निकर्षेण धूम इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः[2] । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः । अतः शब्दादिना यत्किंचित्पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोध उपपद्यते ॥ ६३ ॥

**आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।**
**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥**

ननु समानानां एकाकारकप्रतीतिविषयाणां भावः सामान्यं तच्च कैंचिन्नित्यं धूमत्वादि[3] कैंचिदनित्यं घटादि[4] । तत्र सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेन तदधिकरणानां प्रत्यासत्तिस्तेन यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव

---

१ धूमत्वादिसामान्यलक्षणा या इन्द्रियजन्यत्वाभावात् व्यपारत्वकथनमसंगतमित्यभिप्रेत्य सन्निकर्षकथनम् ॥

२ इह लौकिकसन्निकर्षस्य संयोगादेर्विशेषणविधया घटकत्वं बोध्यम् ॥

३ धूम इत्यादिज्ञाने ॥

४ घटवद्भूतलमित्यादिज्ञाने ॥

तद्धटवता भूतलादीनां कपालादीनां वा ज्ञानं भवति, तत्र ज्ञायमानमनित्यं सामान्यं ( घटादिः ) प्रत्यासत्तिरिति वक्तव्यम् एवं च यत्र तद्धटनाशानन्तरं तद्धटवतः ( भूतलादेः ) स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषान्तद्घटवतां भानं न स्यात्सामान्यस्य तदानीमभावात् । तस्मात्सामान्यज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—**आसत्तिरिति** । आश्रयाणां यज्जातीयेष्विन्द्रियसन्निकर्षस्तेषामिन्द्रियासन्निकृष्टानाम् आसत्तिः प्रत्यासत्तिः ( सन्निकर्षः ) । तथाच सामान्यलक्षणइत्यत्र लक्षणशब्दस्य विषयोऽर्थः । तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते, ननु चक्षुःसंयोगादिकं विनाऽपि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनां चाक्षुषादि प्रत्यक्षं स्यादत आह—**तदिन्द्रियजेति** । अस्यार्थः । यदा बहिरिन्द्रियेण सामान्यलक्षणया ( प्रत्यासत्त्या ) ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यविषयक-तदिन्द्रियजन्यबोधसामग्र्यपेक्षिता सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकं तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६४ ॥

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।**
**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥**

ननु सामान्यलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा, ज्ञानलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—**विषयीति** । सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य निखिलधूमादेर्ज्ञानं जनयति अतीतानागतधूमादिषु चक्षुः संयोगादेरभावात् । इन्द्रियाणामसन्निकृष्टानां प्रत्यक्षाजनकत्वात् । ज्ञानलक्षणः ज्ञानरूप(स्सन्निकर्ष-)स्तु यस्य विषयी(यद्विषयकं ज्ञानं) **तस्यैव व्यापारः** प्रत्यासत्तिरित्यर्थः । तेन[1] सुरभि चन्दनमिति चाक्षुषोपनीतभाने स्वरूपतः सौरभत्वभानं ज्ञानलक्षणयैव, तदानीं सौरभत्वांशे[2] धर्मान्तरस्यागृहीततया सामान्यलक्षणया तद्भानानिर्वाहादितिदिक् ॥

१ यत्र पूर्वदिने कश्चिदापणे किंञ्चिच्चन्दनखण्डं घ्रात्वा सुरभीदमिति निश्चिकाय स एव परदिने तत्र गतः केनचित्केत्रा चन्दनखण्डमिदं सुष्ठु न वेति पृष्टोऽघ्रात्वैव सुरभिचन्दनखण्डमिदमिति वदति तत्रेत्यर्थः ।

२ जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मप्रकारेणैव भाननियमात्सौरभत्वेन स्वरूपेणैव तद्भानमिति ।

**योगज इति** । योगाज्जातो योगजः । योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रमाणक इत्यर्थः । स युक्तयुञ्जानभेदतः द्विविधः । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापिद्वैविध्यमिति भावः ॥ ६५ ॥

**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।**

**युक्तस्येति** । योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते, अयमेव विशिष्टयोगवत्त्वाद्वियुक्त इत्युच्यते, तस्य **सर्वदेति** । चिन्तासहकारं विनापीत्यर्थः । **भानम्** । सर्वविषयाणां प्रत्यक्षम् । **अपरः** । युञ्जानः विषयव्यावृत्तमानसः । चिन्ताध्यानं मनसस्तदेकाग्रीकरणम् तत्सहकृतः । तत्सहकारेणस्थूलसूक्ष्माव्यवहितविप्रकृष्टानर्थान्प्रत्यक्षीकरोतीत्यर्थः ॥

इति अन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां प्रत्यक्षनिरूपणंनाम चतुर्थः परिच्छेदः ॥

---

## अथानुमानपरिच्छेदः ।

**व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥**

अनुमितिं व्युत्पादयति[1]—**व्यापारस्त्विति** । अनुमायामित्युत्तरश्लोकस्थमत्रान्वेति । अनुमानमनुमा तस्यामनुमायामनुमितौ तु व्याप्तिधीः व्याप्तिज्ञानं[2] करणं परामर्शो व्यापारः । तथाहि येन पुरुषेण महानसादौ[3] धूमे

---

१ प्रत्यक्षानुभवरूपे फले सन्निकर्षरूपव्यापारद्वारेन्द्रियस्य करणत्वं सपरिकरमभिधाय तज्जन्यानुमितिरूपे फले करणं निर्देक्ष्यन्तत्त्वप्रयोजकं तद्व्यापारमुपपादयतीत्यर्थः । प्रत्यक्षानुमित्योश्चोपजीव्योपजीवकभावः सम्बन्ध इति प्रत्यक्षानन्तरानुमित्यभिधाने उपजीवकत्व- ( कार्यत्व- ) मेव संगतिः । संगतित्वं चानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वमस्ति च तत्प्रकृते कार्यत्वे, प्रत्यक्षकार्यं किमिति जिज्ञासोदयात् । सा च संगतिः षोढ़ा "सप्रसंग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैककार्यत्वे षोढ़ा संगतिरिष्यत" इति महदुक्तेः । अत्र हेतुतापदमजहत्स्वार्थवृत्त्या कार्यत्वकारणत्वान्यतररूपेण तदुभयपरमिति नाधिक्यमितिबोध्यम् ।

२ करणे निर्दिष्टे एव व्यापारे जिज्ञासोदयान्मूले पश्चान्निर्दिष्टमपि करणं प्रथमं दर्शयति, ।

३ पाकशाला महानसम् ।

वन्हेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः पर्वतसमीपं गतस्तत्राविच्छिन्नमूलां धूमलेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिसरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते, तदनन्तरं पर्वतो वह्निमानिति ज्ञानं जायते तदेवानुमितिः ॥ ६६ ॥

अनुमायां, ज्ञायमानं लिङ्गं तु करणं नहि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

अत्र प्राचीना व्याप्यत्वेन ज्ञायमानं धूमादिकं लिंगमनुमितिकरणमिति वदन्ति तद्दूषयति—**ज्ञायमानमिति** । लिंगस्यानुमित्यकरणत्वे युक्तिमाह—**अनागतादीति** । यद्यनुमितौ लिंगकरणं स्यात्तदाऽनागतेन विनष्टेन वा लिंगेनानुमितिर्नस्यादनुमितिकरणस्य लिंगस्य तदानीमभावात् ॥ ६७ ॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥ ६८ ॥

परामर्शं लक्षयति—**व्याप्यस्येति** । व्याप्यस्य व्याप्तिविशिष्टस्य विषयित्वं ( विषयतानिरूपकत्वम् ) षष्ठ्यर्थः । पक्षे वृत्तित्वं पक्षवृत्तित्वं पक्षवृत्तित्वस्य धीरितितत्पुरुषोऽत्रापि पूर्ववद्विषयित्वं षष्ठ्यर्थस्सप्तम्यर्थश्च निरूपितत्वं तथाच व्याप्तिविशिष्टविषयतानिरूपकं सत्पक्षनिरूपित-

---

१ यत्र २ धूमस्तत्र २ अग्निरिति, ।

२ धूमदर्शनस्य व्याप्तिस्मरणे एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीत्येवमुद्बोधकविधया हेतुत्वसम्पादनार्थं यादृशविशेषणविशिष्टस्य धूमस्य व्याप्तिसम्बन्धितया ज्ञानं तादृशधूमदर्शनस्यैव व्याप्तिस्मृतावुद्बोधकत्वमित्यभिप्रायेण अविच्छिन्नेत्युक्तम् ।

३ विषयता हि प्रकारता-विशेष्यता संसर्गतेत्येतत्त्रितयानुता स्वरूपसम्बन्धरूपा ज्ञानविषयनिष्ठा, *त्रयाणामेव ज्ञानविषयत्वात् तथाच पक्षादेर्विशेष्यत्वे विशेषणत्वे वा नोक्तपरामर्शलक्षतिः । यद्वा व्याप्तिविशिष्टस्य पक्षेणसह-वैशिष्ट्या-( सम्बन्धा- )वगाहि ( विषयकारकम् ) ज्ञानं परामर्शः । यथा च पर्वतेन सह धूमस्य संयोगावगाहि ज्ञानमनुपदवक्ष्यमाणद्विप्रकारकमपि भवतीत्यूह्यम् ।

---

* विशेषण-विशेष्य-संसर्गाणामेव,

वृत्तित्वनिष्ठविषयतानिरूपकं यज्ज्ञानं वह्निव्याप्यो धूमः पर्वते ( पर्वतवृत्तिः) इति, वह्निव्याप्यधूमवान्पर्वत इति, वा स परामर्श उच्यते ॥ व्याप्यो नाम व्याप्त्याश्रयस्तत्र का व्याप्तिरित्यत आह—**व्याप्तिरिति** । साध्योऽस्मिन्नस्तीति साध्यवांस्तस्मादन्यस्तस्मिन्नसम्बन्धोऽवृत्तित्वं व्याप्तिः उक्तः । पर्वतोवह्निमान्धूमादित्यादौ साध्यो वह्निस्तद्वान्महानसादिस्तदन्यो जलह्रदादिस्तदवृत्तित्वं धूमस्येतिलक्षणसमन्वयः । धूमवान्वह्नेरित्यादौ साध्योधूमस्तद्वान् महानसादिस्तदन्यस्मिन्नयोगोलके[2] वह्निसत्त्वान्नातिव्याप्तिः ॥ ६८ ॥

**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥**

नन्वेवं सतिकेवलान्वयिसाध्यकस्थले इदं वाच्यं ज्ञेयत्वादित्यादौ साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिरतः सिद्धान्तलक्षणमाह—**अथवेति** । हेतुमति निष्ठा वृत्तिर्यस्य स हेतुमन्निष्ठः स चासौ विरहोऽभावस्तस्य अप्रतियोगिना साध्येन सह हेतोरैकाधिकरण्यं सामानाधिकरण्यं व्याप्तिरुच्यत इत्यर्थः । हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति समुदितार्थः[3] । वह्निमान्धूमादि-

१ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतावत्त्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता तदनवच्छेदकं यद्धेतुतावच्छेदकं तद्वत्त्वं व्याप्तिरितिनिष्कर्षः ।

२ तप्तायःपिण्डे ।

३ हेतुतावच्छेदकावच्छिन्नाधिकरणवृत्तिः निरवच्छिन्नवृत्तिकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरितितदर्थः । वह्निमान्धूमादित्यादौ धूमाधिकरणपर्वतादौ निरवच्छिन्नवृत्तिकोघटाभावादिस्तत्प्रतियोगितानवच्छेदकं वह्नित्वमिति लक्षणसमन्वयः । धूमवान्वह्नेरित्यादौ तु तादृशोऽभावोधूमाभाव एव तत्प्रतियोगितावच्छेदकमेव धूमत्वं साध्यतावच्छेदकमिति नातिव्याप्तिः । कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणाय निरवच्छिन्नवृत्तिकेत्यभावविशेषणम् कपिसंयोगाभावस्तु वृक्षादौ न निरवच्छिन्नवृत्तिः मूलादेस्तदवच्छेदकत्वात् । हेतुतावच्छेदकावच्छिन्नेतिकरणाच्च विशिष्ट-(गुणकर्मान्यत्वविशिष्ट-) सत्त्वस्य शुद्धसत्त्वानतिरेकितया सत्त्वाधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वत्वे सत्त्वेऽपि द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः । हेत्वधिकरणञ्च हेतुतावच्छेदकसम्बन्धेन, तेन वह्नित्वस्य कालिकसम्बन्धेन धूमाधिकरणह्रदादिनिष्ठाभावप्रतियोगिताव-

त्यादौ धूमसमानाधिकरणो योऽत्यन्ताभावः स घटो नास्तीत्याकारको घटात्यन्ताभावस्तदप्रतियोगी वह्निस्तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः । धूमवान्वह्नेरित्यादौ तु वह्निसमानाधिकरणो योऽत्यन्ताभावः स अयोगोलके धूमोनास्तीत्याकारको धूमात्यन्ताभावस्तत्प्रतियोग्येव धूम इति नातिव्याप्तिः ॥ ६९ ॥

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

एवं व्याप्तिलक्षणमुक्त्वा तद्वैशिष्ट्येन व्याप्यस्य[1] स्वरूपमभिधाय पक्षवृत्तित्वमित्यत्र[2] पक्षत्वं किंतदाह—**सिपाधयिपयेत्यादि** । सिषाधयिषा साधयितुमिच्छा तया शून्या तदभावविशिष्टा सिद्धिः यत्र न विद्यते स पक्ष इत्यर्थः । सिषाधयिषाविरहविशिष्टसिध्यभावः[3] पक्षता

---

च्छेदकत्वेऽपि न वह्निमान्धूमादित्यादावव्याप्तिः । हेत्वधिकरणवृत्तित्वञ्च दैशिकविशेषणतया सा च भावाभावसाधारणी घटो नास्ति घटाभावो नास्तीति तुल्यवत्प्रतीतेः । प्रतियोगिता च साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, नातः समवायादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वेऽपि वह्निमान्धूमादित्यदावव्याप्तिः । सामानाधिकरण्यञ्च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तित्वम् । कम्बुग्रीवादिमान्नास्तीति प्रतीत्यागुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वस्वीकारात् तद्रूपेण साध्यताया व्यभिचारिणि नातिव्याप्तिः । साध्यसाधनभेदेन व्याप्तेर्भेदाद्यत्र ( दण्डिमद्दण्डिसंयोगादित्यत्र ) साध्यतावच्छेदकं नाना तत्र प्रतियोगितावच्छेदकतानवच्छेदकं साध्यतावच्छेदकतावच्छेदकमित्यादिरीत्या वाच्यम् । येन सम्बन्धेन हेतोः पक्षवृत्तित्वं ज्ञायते तेन सम्बन्धेन हेतुमत्ताज्ञानाद्यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तेन सम्बन्धेन साध्यस्यानुमितिरिति हृदयम् ।

१ परामर्शलक्षणघटकस्येत्यादिः ।

२ मूले पक्षतानिरूपणे सङ्गतेरप्रदर्शनात्तां प्रदर्शयति—पक्षवृत्तित्वमित्यत्रेति । तथाच प्रकृतस्य परामर्शस्य घटकतया पक्षधर्मत्वमपि प्रकृतं तदुपपादकत्वरूपोपोद्घातसङ्गत्या पक्षतानिरूपणम् । व्याप्तिनिरूपणानन्तरं पक्षतानिरूपणे तु एककार्यकारित्वमेव सङ्गतिः । एककार्यकारित्वं चैककार्यप्रयोजकत्वं प्रयोजकत्वञ्च कारणकारणतावच्छेदकसाधारणम् । तेनानुमितौ पक्षतायाः कारणत्वेऽपि, व्याप्तेश्च विषयविधया कारणतावच्छेदकत्वेऽपि च न क्षतिः ।

३ मूले पक्षतालक्षणस्य स्पष्टतयाऽनुक्तेः पक्षतालक्षणं स्वातन्त्र्येण प्रदर्शयन् मूलार्थमाह ।

तद्वान्पक्ष इति समुदितार्थः । सिषाधयिषामात्रं न पक्षता तां विनापि निशि गृहे सुप्तस्य घनगर्जितश्रवणेन मेघानुमानात् । अत एव साध्यसन्देहोपि न पक्षता विनापि सन्देहं तदनुमानात् ॥ ७० ॥

**अनेकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥**

प्रसङ्गसङ्गत्या[1] हेत्वाभासान्[2] विभजते—**अनेकान्त इत्यादिना** । सव्यभिचारोऽनेकान्तः प्रतिपक्षितः सत्प्रतिपक्षः[3] । कालात्ययापदिष्टो बाधित इति च अनर्थान्तरम् । तत्त्वञ्च साधारणाद्यन्यतमत्वम् ॥ ७१ ॥

**आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।**
**तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥**
**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।**
**यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥ ७३ ॥**

तदेव स्पष्टयति—**आद्य इति** । पञ्चविधहेत्वाभासमध्ये आद्यः प्राथमिकः एकान्तः अव्यभिचारी, स एव ऐकान्तिकः । विनयादित्वात् स्वार्थे ठक् । न ऐकान्तिकोऽनैकान्तिकः सव्यभिचारः । स साधारणाऽसाधारणानुपसंहारिभेदात् त्रिधा त्रिप्रकारको भवेत् । साधारणं लक्षयति—**य इति** । सपक्षः निश्चितसाध्यवान्, साध्यप्रकारकनिश्चयविशेष्य इति यावत् । विपक्षः निश्चितसाध्याभाववान् साध्याभावप्रकारकनिश्चयविशेष्य इति यावत् । एतदुभयवृत्तित्वं साधारणत्वम् । वस्तुतः । विपक्ष-( साध्याभाववद् ) वृत्तित्वमेव तत्त्वम्[4] ।

---

१ स्मृतस्य ( अभिहितवस्तुसम्बन्धित्वेन स्मृतिविषयस्य ) उपेक्षानर्हत्वं ( निरूपणयोग्यत्वं प्रसङ्गलक्षणम् ।

२ हेतुवदाभासन्ते इति हेत्वाभासा असद्धेतवः दुष्टहेतव इतियावत्तान् । हेत्वाभासत्वञ्चअनुमिति-तत्कारणान्यतरविरोधि-( प्रतिबन्धक- ) यथार्थज्ञानविषयत्वं, सव्यभिचाराद्यन्यतमत्वंवा, हेत्वाभासानां परस्परं विजयलक्षणैककार्यकारित्वमेव सङ्गतिरितिध्येयम् ।

३ प्रतिपक्षःसंजातोऽस्येति व्युत्पत्तेः ।

४ अत्रायमर्थः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताग्रहं प्रति येन सम्बन्धेन साध्याभाववत्तानिश्चयःप्रतिबन्धकस्तेनसम्बन्धेनसाध्याभाववत्त्वंविवक्षणीयमिति, तथाच

नच विरुद्धेऽतिव्याप्तिरिति भ्रमितव्यम् उपधेयसङ्करेऽप्युपाधेरसङ्करादिति न्यायेन तस्य विरुद्धसाधारण्येऽपि क्षतिविरहात् । उदाहरणम् । पर्वतो धूमवान्वह्निमत्त्वादिति । अत्र वह्निमत्त्वस्य ( वह्नेः ) धूमाभाववति अयोगोलके विद्यमानत्वात् । एतस्य व्याप्तिग्रहप्रतिबन्धकत्वमेव दूषकताबीजम् ॥ असाधारणं लक्षयति—**यस्त्विति** । उभयस्मात् सपक्षाद्विपक्षाच्च व्यावृत्त एतदुभयावृत्तिरित्यर्थः । यथा नित्यः शब्दः शब्दत्वादिति । अत्र शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ॥ एतस्य तु व्याप्तिग्रहकारणीभूतसाध्यसामानाधिकरण्यग्रहप्रतिबन्धकत्वं दूषकताबीजम् ॥ ७२ ॥ ७३ ॥

**तथैवानुपसंहारी केवलान्वयिपक्षकः ।**
**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥**

अनुपसंहारिणं लक्षयति—**तथैवेति** । अत्र केवलान्वयिपदं केवलान्वयिधर्मावच्छिन्नपरं केवलान्वयी पक्षो यस्य स केवलान्वयिपक्षकः । अत्र पक्षता च साध्यसंशयरूपा ग्राह्या, तेन सर्वमभिधेयं प्रमेयत्वादित्यत्र सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिरिति तदेवास्योदाहरणम् ॥ वस्तुतस्तु । केवलान्वयिधर्मावच्छिन्नपक्षताकत्वस्यानुमित्यनुत्पादप्रयोजकत्वाभावात्पक्षपदं साध्यपरं केवलान्वयिसाध्यकत्वमेव तत्त्वम् ॥ एतस्य च व्यतिरेकव्याप्तिग्रहप्रतिबन्धकत्वं दूषकताबीजम् ॥ विरुद्धरूपद्वितीयहेत्वाभासं लक्षयति—**य इति** ।

---

साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावान्साधारणइत्यर्थः । तेन वह्निमान्धूमादित्यादौ हेतुमति पर्वतादौ तत्तत्साध्याभावस्य सम्बन्धान्तरावच्छिन्नसाध्यसामान्याभावस्यच सत्त्वेऽपि, साध्याभाववति धूमावयवादौ समवायादिना धूमादेर्वृत्तित्वेऽपि च नातिव्याप्तिः ॥

१ अन्येतु सपक्षावृत्तिरसाधारणः सपक्षश्च साध्यवान् तथाच साध्यवद्वृत्तित्वसामान्याभाववत्त्वमसाधारणत्वम् ।

२ संशयोत्पत्तिक्षणे निश्चयवारणाय निश्चयं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्यावश्यं वाच्यतया प्रकृते सर्वत्र साध्यसन्देहसत्त्वे तत्पूर्वं तत्सामग्र्याः सत्त्वेन साध्यनिश्चयस्य कुत्राप्यसम्भवेन व्यापकसाध्यसामानाधिकरण्यप्रमेयत्वादिरूपव्याप्तिग्रहानुत्पादान्न तत्रानुमितिरित्यनुपसंहारिणो हेत्वाभासत्वमिति भावः ।

एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः। तथाच साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वं तेनासाधारणेनातिव्याप्तिः। यथा नित्यः शब्दः कृतकत्वादिति। कृतक-(कार्य-)त्वाभावो हि नित्यत्वव्यापक इति साध्याभावग्रह[1]सामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वमेवास्य दूषकताबीजम्[2]॥ ७४ ॥

**आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥**

असिद्धरूपतृतीयहेत्वाभासं लक्षयंस्तद्धर्मभेदानाह—**आश्रयेत्यादिना**। असिद्धित्वञ्च आश्रयासिद्ध्याद्यन्यतमत्वं तद्वत्त्वमेवासिद्धत्वम्। तत्राश्रयासिद्धिः आश्रये पक्षे असिद्धिः पक्षतावच्छेदकस्याभावः। स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वेनाभिमतस्य (हेतोः) अभावः॥ अपरा तृतीया व्याप्यत्वस्य व्याप्तेर[3]सिद्धिरभावो व्याप्यत्वासिद्धिः। अतोभेदादसिद्धिस्त्रिधा त्रिप्रकारा स्यादित्यर्थः ॥ ७५ ॥

**पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः।**
**ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥**

तत्र पक्षासिद्ध्याश्रयासिद्ध्योरनर्था[4]न्तरत्वमभिसन्धायाह—**पक्षासिद्धिरिति**। मणिमयः पर्वतो वह्निमान्धूमादित्युदाहरणस्वरूपम्। अत्र पर्वतो न मणिमय इति ज्ञाने सति वह्निव्याप्यधूमवानयं मणिमयपर्वत इति परामर्शो न जायत इत्यस्याः[5] परामर्शप्रतिबन्धकत्वं दूषकताबीजम्। स्वरूपासिद्धिमुदाहरति—**ह्रद इति**। अपरा स्वरू[6]पासिद्धिः। अत्रापि

---

१ तेन सम्बन्धेन तद्वत्ताबुद्धिं प्रति तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्ताबुद्धेः प्रतिबन्धकत्वात्।

२ सत्प्रतिपक्षे प्रतिहेतुः साध्याभावसाधकोऽत्र तु हेतुरेवेतिविशेषः। साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः।

३ अत्रेदमवधेयम् साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः। हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा पर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमात्, इत्यादौ तद्ग्रहदशायां हेतुतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टव्याप्तिग्रहप्रतिबन्धः फलम्। तयोर्व्याप्यत्वासिद्धावन्तर्भावान्न हेत्वाभासाधिक्यमिति॥

४ एकार्थत्वमभिप्रेत्य॥

५ आश्रयासिद्धेः॥

६ स्वरूपस्यैव असिद्धिः पक्षे अभाव इत्यक्षरार्थः।

ह्रदो न धूमवानिति ज्ञाने सति वह्निव्याप्यधूमवानयं ह्रद इति परामर्शो न जायत इत्यस्या अपि परामर्शप्रतिबन्धकत्वमेव दूषकताबीजम् ॥७६॥

**व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।**
**विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥**

व्याप्यत्वासिद्धिमुदाहरति—**व्याप्येति** । पर्वतो वह्निमान् नीलधूमादित्यादौ नीलधूमत्वं गुरुतया[1] न हेतुतावच्छेदकमिति[2] नीलधूमे व्याप्यत्वासिद्धिरेवमन्यत्राऽपि बोध्यम् ॥ चतुर्थहेत्वाभासं लक्षयति—**विरुद्धयोरिति** । विरुद्धयोः[3] परस्परासमानाधिकरणयोः साध्ययोर्यौ हेतू तयोः परामर्शे सति सन् विद्यमानः प्रतिपक्षः स्वीयसाध्याभावसाधकोऽपरहेतुः यस्य स सत्प्रतिपक्षस्तस्य भावः सत्प्रतिपक्षता, भवति । तद्वान् सत्प्रतिपक्ष[4] इत्यर्थः । प्रतिपक्षित इत्यनेनापि प्रतिपक्षः सञ्जातोऽस्येति व्युत्पत्त्या[5]ऽयमेवार्थः पूर्वमभिहितः ॥ ७७ ॥

**साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।**
**उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥**

पञ्चमहेत्वाभासं लक्षयति—**साध्येति** । यत्रानुमितौ पक्षः पक्षता[6]वच्छेदकतत्तद्धर्मविशिष्टः साध्येन शून्यः भवति असौ बाधस्तदुप-

---

१ लघुधर्म्मसमनियतगुरुधर्म्मस्यानवच्छेदकत्वमिति हि नियमः ।

२ स्वसमानाधिकरणव्याप्यतावच्छेदकधर्म्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्तदवच्छिन्नस्यैव व्याप्यत्वान्न नीलधूमे व्याप्यत्वं सिध्यति किन्तु धूमत्वावच्छिन्ने धूमएवेति भावः । वह्निमान्धूमप्रागभावादित्यत्र धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति । नहि धूमत्व-धूमप्रागभावत्वयोः सामानाधिकरण्यमस्ति ।

३ कपिसंयोग—तदभाव—व्याप्यवत्त्वपरामर्शेऽपि न सत्प्रतिपक्षितत्वमत उक्तं विरुद्धयोरिति—तथाच तयोरसामानाधिकरण्याभावान्न दोषः । एकत्रैव वृक्षेऽग्रावच्छेदेन कपिसंयोगो मूलावच्छेदेन तदभावश्च सम्भवतीति हृदयम् ॥

४ तथाच स्वसाध्यविरुद्ध—साध्याभाव—व्याप्यवत्ता—परामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषयः सत्प्रतिपक्ष इत्यर्थः । स्वं सत्प्रतिपक्षत्वेनाभिमतो हेतुस्तत्साध्यविरुद्धो यः साध्याभाव इति हि तदर्थः ॥

५ तदस्य संजातं तारकादिभ्यइतजिति पाणिनिसूत्रेणेतच्प्रत्ययोऽत्र बोध्यः ।

६ तेन घटे द्वितीयादिक्षणे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि मूलावच्छिन्नवृक्षत्वं पक्षतावच्छेदकमिति अग्रावच्छेदेन कपिसंयोगाभावेऽपि न बाधसद्भाव इति ध्येयम् ॥

पादको हेतुर्बाधित इत्यर्थः ॥ उदाहरणमाह—**उत्पन्नेति** । उत्पन्नकालीनघटो गन्धवान्पृथिवीत्वात् । अत्रोत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति समवायसम्बन्धेन गुणोत्पत्तिं प्रति तादात्म्यसम्बन्धेन द्रव्यस्य कारणत्वादिति घट उत्पत्तिकाले निर्गन्ध एवेति निश्चयस्तत्रोत्पत्तिकालीनघटत्वावच्छिन्ने घटे गन्धवत्त्वसाधकः पृथिवीत्वरूपो हेतुर्बाधित एवमन्यत्रापीति शुभम् ॥ ७८ ॥

इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायामनुमाननिरूपणं नाम पञ्चमः परिच्छेदः ॥*॥

---

## अथोपमानपरिच्छेदः ।

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**
**सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।**
**गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥**

उप[1]मितिं व्युत्पादयति—**ग्रामीणस्येति युग्मेन** । प्रथमतः गवयादिकं पश्यतः ग्रामीणस्य पुरुषस्य या गवादीनां सादृश्यधीः अयं गोसदृश इति गवयादिविशेष्यकं गोसादृश्यप्रकारकं प्रत्यक्षं स्यात् सा (धीः) करणमर्थादुपमितेः । मतमिष्टम् अर्थात्तार्किकाणाम् । एतेनोपमितेः करणमुपमानमिति व्युत्पत्तिः प्रदर्शिता भवति, गोसदृशो गवयपदवाच्य इत्यतिदेशस्य वाक्यार्थस्य स्मृतिः स्मरणं व्यापार उच्यते । तथाच तत्प्रत्यासत्त्या सादृश्यज्ञानस्य करणत्वमुपपन्नं भवति । गवयादिपदानां गोसदृशारण्यकपशौ शक्तिधीर्गवयो गवयपदवाच्य इति शक्तिग्रहो यः स एव उपमा उपमितिः फलमित्यक्षरार्थः ॥ एतदुक्तं भवति । यथा केनचिद्वृद्धेन गोसदृशो गवय इत्युपदिष्टः कश्चित्पुरुषः वनं गत्वा गवयं पश्यन् अयं गोसदृश इति प्रत्यक्षतस्तं निश्चित्य तादृश्यवाक्यार्थस्मरणेन गव-

---

१ अवसरसङ्गत्येतिशेषः । अवसरोऽवश्यवक्तव्यत्वम् । अनुमाननिरूपणानन्तरमेतन्निरूपणस्यैवावश्यवक्तव्यत्वात् । प्रमाणसूत्रक्रमानुरोधात् ॥

येगवयपदार्थ इत्यवधारयति पश्चाद्गवयोऽयमित्यसकृद्व्यवहरतीति ॥ एव-मन्यत्रापि बोध्यम् ॥ ७९ ॥ ८० ॥

इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायामुपमाननिरूपणं नाम षष्ठः परिच्छेदः ॥*॥

---

## अथ शब्दपरिच्छेदः ।

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

शाब्दबोधप्रकारं दर्शयति[1]—पदज्ञानं त्विति । अत्र तुशब्द एव-कारार्थे । पदज्ञानमेव करणं न तु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ[2] शाब्दबोधात् । तत्र—करणे पदार्थधीः वृत्त्या[3] पदजन्य-पदार्थस्मरणं द्वारं व्यापारः । वृत्तिश्च शक्तिलक्षणान्यतररूपः सम्बन्धः । शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः । स चास्मात्पदादयमर्थो बोद्धव्य इति सङ्केत-(इच्छा-)रूपः । शाब्दबोधः वाक्यार्थज्ञानं फलम् । तत्र—पदजन्यपदार्थोपस्थितौ शक्तिधीः शक्तिज्ञानं सहकारिणी[4] उपो-द्बलिकेत्यर्थः ॥ ८१ ॥

लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः ।
आसत्तिर्योग्यताऽऽकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥

---

१ उपजीव्योपजीवक*भावसङ्गतिमभिप्रेत्योपमानानन्तरं शाब्दप्रकारं दर्शय-तीत्यर्थः ।

२ आदिना द्वित्वादिबोधकविजातीयहस्तचेष्टादेः सङ्ग्रहः । वृत्त्या पदजन्येति च आकाङ्क्षितैकदेशपूरणम् । एतदभावे घटादिशब्दात्समवायसम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तिः । पदजन्येत्युक्त्या पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि न शाब्दबोधः ।

३ पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन (शक्तिसम्बन्धेन) स्मरणानु-पपत्तिः । पदज्ञानस्य चैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीतिन्यायेनार्थ-स्मारकत्वं बोध्यम् ।

४ विसर्गरहितपाठ एव साधीयान् ।

---

* शाब्दबोधस्य शक्तिज्ञानात्मकोपमितिजन्यत्वेन फलयोरप्युपजीव्योपजीवकभावः ।

**कारणं, संनिधानं तु पदस्यासत्तिरुच्यते।**
**पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता॥ ८३॥**

पूर्वपद्ये वृत्त्येत्यध्याहृतं तदर्थः शक्तिरूपोऽन्यतोऽपि[1] सुग्रह इति लक्षणास्वरूपमाह—**लक्षणा शक्यसम्बन्ध इति**। **शक्येन** यत्किञ्चित्पदशक्यार्थेन **सम्बन्धः** सामीप्यादिर्लक्षणेत्यर्थः। सा द्विविधा जहत्स्वार्था[2] अजहत्स्वार्था[3] च। तत्राद्या यथा—गङ्गायां घोष इत्यादौ गङ्गापदं स्वार्थं भगीरथरथखातावच्छिन्नजलप्रवाहं जहत् स्वसमीपवर्त्ति तीरं लक्षयति। द्वितीया यथा—काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदं स्वार्थमजहद्दध्युपघातकं लक्षयति, इयं **तात्पर्यस्य** वक्तुरिच्छाया **अनुपपत्तितः** अनुपपत्तेः भवति। पूर्वत्र शैत्यपावनत्वादिविशिष्टतीरबोधस्य, उत्तरत्र च सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्॥ विस्तरस्त्वन्यत्र द्रष्टव्यः॥ शाब्दबोधे सहकारिकारणान्याह—**आसत्तीति**। आसत्तिश्च योग्यता च आकाङ्क्षा च तात्पर्यश्चेति द्वन्द्वस्तेषां ज्ञानमिति षष्ठीतत्पुरुषः। "द्वन्द्वान्ते" इतिन्यायेन ज्ञानपदस्य प्रत्येकमन्वये आसत्तिज्ञानं योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्यज्ञानञ्च शाब्दबोधे कारणमिष्यते[4] इष्टम्। तत्रासत्तिपदार्थमाह—**सन्निधानन्त्विति**। पदस्य सन्निधानं त्वासत्तिरुच्यत इत्यर्थः। सन्निधानञ्च यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितः (तात्पर्यविषयः) तादृशपदयो[5]रव्यवधानम्। न त्वविलम्बेनोच्चारणमात्रम्। तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ न शाब्दबोधः। क्वचिदासत्तिभ्रमाच्छाब्दबोधो भवत्येव तज्ज्ञानसामान्यस्य शाब्दकारणत्वाभ्युपगमात्॥ योग्यतां निर्वक्ति—**पदार्थ इत्यादिना**। अत्र प्रथमं तत्पदमेकपदार्थपरम्। द्वितीयं त्वपरपदार्थपरम्। तथाच एकपदार्थेऽपरपदार्थसंबन्धो योग्यता **परिकीर्तिता** उक्तेत्यर्थः॥ तेन वह्निना सिञ्चतीत्यादितो न शाब्दबोधः। सेचने वह्निकरणकत्वस्याऽयोग्यत्वावधारणात्॥ ८२॥ ८३॥

---

१ उपमानखण्डोक्तरीत्याऽपि॥
२ जहति पदानि स्वार्थं यस्यां सा०॥
३ न जहति पदानि स्वार्थं यस्यां सा०॥
४ उत्तरश्लोकस्थमत्रान्वेति।
५ तथाच पदस्येति जात्येकवचनम्।

यत्पदेन विना यस्यानजुभावकता भवेत्।
आकाङ्क्षा, वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

आकाङ्क्षां निर्वक्ति—यत्पदेनेत्यादिना। येन पदेन विना यस्य पदस्य अननुभावकताऽन्वयाननुभावकत्वं ( शाब्दबोधाजनकत्वं ) भवेत् तेन पदेन सह तस्य[1] पदस्याकाङ्क्षेत्यर्थः॥ क्रियापदेन विना कारकपदं नान्वयबोधं जनयतीति तेन क्रियापदेन तस्य कारकपदस्याकाङ्क्षा। वस्तुतस्तु[2] क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थं परन्तु घट-कर्मताबोधं प्रति घटपदोत्तरद्वितीयाविभक्त्याऽऽकाङ्क्षाज्ञानं कारणं तेन घटः कर्म्मत्व-मानयनं कृतिरित्यादौ न शाब्दबोधः॥ तात्पर्यं निर्वक्ति—वक्तुरिच्छेति। घटमानयेत्यादौ कर्मत्वविशेष्यकाधेयतासंसर्गक-घटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्यं तादृशेच्छयोच्चरितमिदं वाक्यमित्याकारकं श्रोतुस्तात्पर्यज्ञानं शाब्दबोधे कारणमित्यर्थः॥ तेन[3] भोजनकाले सैन्धवमानयेत्युक्तौ लवणस्यैव, यात्राकाले चाश्वस्यैव, बोधइत्यूह्यम्॥८४॥

इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां शब्दनिरूपणं नाम सप्तमः परिच्छेदः ॥*॥

---

## अथ स्मृतिप्रक्रिया।

पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तं तत्रानुभवभेदा दर्शिताः स्मरणं

---

१ तत्पदविशिष्टत्वं तत्पदस्येत्यर्थः। इदन्तु बोध्यम्। आकाङ्क्षालक्षणे पदपदं पदज्ञानपरं मौनिश्लोकानुरोधात्। अत एवाध्याहृतपदेनाप्याकाङ्क्षानिर्वाहः। अध्याहारश्चाश्रुतपदानामनुसन्धानम्॥

२ अयमभिप्रायः। अत्रैकपदेऽपरपदवत्त्वमपरपदाव्यवहितोत्तरत्वम् तत्र चाव्यवधानांशस्याऽऽसत्त्यैव लाभः। आसत्तेः पदाव्यवधानरूपायाः पूर्वमुपवर्णितत्वात्। उत्तरत्वन्तु क्रियाकारकपदयोर्नापेक्षितं चैत्रः पचति पचति चैत्र इति वाक्यद्वयादप्यन्वयबोधादतः क्रियाकारकपदयोराकाङ्क्षा नास्त्येव, किन्तु प्रकृतिप्रत्ययोरेव तत्राप्यव्यवधानांशस्यासत्त्यालाभात्प्रत्यये प्रकृत्युत्तरत्वरूपाकाङ्क्षाज्ञानं कारणमिति॥

३ तात्पर्यज्ञानस्य शाब्दे कारणत्वाभ्युपगमेन।

तु सुगमतया न दर्शितम् तत् इदानीमवसरसङ्गत्या निरूप्यते । **संस्कारमात्रजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणम्** । घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय सत्यन्तम् । सोऽयं देवदत्त इत्याकारकप्रत्यभिज्ञायां तत्तद्देशकालवृत्तित्वरूपतत्तत्संस्कारजन्यत्वस्य सत्वेन तत्रातिव्याप्तिरिति मात्रपदम् । यद्यपि संस्कारमात्रजन्यत्वं संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वं तच्च स्मृतावसम्भवि तत्र संस्कारेतरात्मादिजन्यत्वस्य सत्त्वात्तथापि चक्षुराद्यजन्यत्वे सति संस्कारजन्यत्वे तात्पर्यमवसेयम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानत्वमिति, ध्वंसं प्रति प्रतियोगिनः कारणत्वात् । संस्कारोऽत्र भावनाख्यो ग्राह्यः ॥ इयं (स्मृतिः) द्विविधा यथार्था अयथार्था च, तत्र प्रमाजन्याऽऽद्या, अप्रमाजन्या द्वितीयेति बोध्यम् ॥

॥ इति स्मृतिप्रक्रिया ॥

**साक्षात्कारे सुखादीनां करणं मन उच्यते ।**
**अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥**

इदानीं क्रमप्राप्तं मनो निरूपयति—**साक्षात्कार इति** । सुखादीनां साक्षात्कारे करणं मन उच्यते । इत्थञ्च सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणमुक्तं भवति, वस्तुतस्तु स्पर्शरहितत्वे सति क्रियावत्त्वं मनस्त्वम् ॥ मनसोऽणुत्वे प्रमाणमाह—**अयौगपद्यादिति** । ज्ञानानां चाक्षुषरासनादीनाम् अयौगपद्यादेककालिकोत्पत्तिकत्वाभावात्तस्य मनसोऽणुत्वमिह नैयायिकमते इष्यते इष्टम् ॥ अयमर्थः । नानेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियेण ज्ञानमुत्पद्यते,

---

१ सुगमस्य स्वयमप्यूहितुं शक्यतया दुरूह एवादौ सुधियो जिज्ञासोदयादिति भावः ।

२ अनुभवनिरूपणानन्तरम् ।

३ तथा च प्रत्यभिज्ञायाः प्रत्यक्षजन्यत्वान्न दोषः ।

४ मात्रपदेनाव्याप्तिवारणतात्पर्यानुपपत्तिमूलिकाऽत्रार्थे मात्रपदस्य लक्षणा बोध्या ।

५ मनःसंयोगाद्यतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणापेक्षया लघुलक्षणं चिकीर्षन्नाहैतत् ॥

यदसम्बन्धाच्च परैर्ज्ञानं[1] नोत्पद्यते तन्मनः, विभुत्वे[2]चासन्निधानं न सम्भवतीति न विभु मनः[3] ॥ ८५ ॥

इति मनोनिरूपणम् ॥

॥ इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां द्रव्यपदार्थनिरूपणं नाम अष्टमः परिच्छेदः ॥*॥

---

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥

द्रव्यं[4] निरूप्य गुणं निरूपयति—अथेत्यादिना। अथ द्रव्यनिरूपणानन्तरं गुणाः द्रव्याश्रिताः निर्गुणा निष्क्रियाश्च ज्ञेयाः। तथाच द्रव्याश्रितत्वं ( द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वं ) निर्गुणत्वं ( सामान्यवत्त्वे कर्म्मान्यत्वे च सति गुणशून्यत्वं ) निष्क्रियत्वं ( सामान्यवत्त्वे सति कर्म्मान्यत्वे सति कर्म्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं ) गुणसामान्यलक्षणं फलितम् ॥ इदानीं गुणसाधर्म्यं वक्तुमुपक्रमते—रूपमित्यादिना ॥ ८६ ॥

द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥

स्नेहश्च वेगौ चेति द्वन्द्वः। वेगाविति द्विवचनेन तत्सहभूतः स्थिति-

---

१ नच दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदैव नानेन्द्रियैर्ज्ञानमिति वाच्यम् मनसोऽतिलाघवात्त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः। उत्पलशतपत्रभेदादिवद्यौगपद्यप्रत्ययस्य तु भ्रान्तत्वात्।

२ ननु मनो विभु स्पर्शरहितद्रव्यत्वादाकाशवदिति चेन्न मनसो विभुत्वे आत्ममनःसंयोगस्यासमवायिकारणस्याभावा ज्ज्ञानानुत्पत्तिप्रसङ्गात्। भावकार्यमात्रेऽसमवायिकारणजन्यत्वनियमात्। विभुद्वयसंयोगस्य चानभ्युपगमात्। *तदभ्युपगमे तस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्। पुरीतद्व्यतिरिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति तदा सुषुप्तिः। यदा निस्सरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

३ मध्यमपरिमाणवत्त्वे त्वनित्यत्वप्रसङ्गः।

४ अवसरसङ्गत्येति शेषः ॥

---

* तस्य नित्यत्वेनासमवायिकारणक्रियाद्यसत्त्वेऽपि न क्षतिरिति ॥

स्थापकसंस्कार उच्यते । वेगपदस्य भावनान्यसंस्कारपरत्वमाश्रित्य संस्कारद्वयबोधकत्वाद्द्विवचनमिति तु हृदयम् ॥ अमी रूपादयो दश मूर्त्तगुणाः मताः । मूर्त्तगुणत्वम् ( अमूर्त्तावृत्तिगुणत्वम् ) प्रदर्शितगुणानां साधर्म्यमित्यर्थः ॥ बुद्ध्यादयः बुद्धिसुखदुःखेच्छाद्वेषयत्नाः ॥ ८७ ॥

**एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ।**
**संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥**

एते धर्मादयो दश । सर्वे विद्वद्भिरमूर्तगुणाः परिकीर्तिताः । अमूर्तगुणत्वं ( मूर्त्तावृत्तिगुणत्वं ) प्रदर्शितगुणानां साधर्म्यमित्यर्थः ॥ **संख्यादयो विभागान्ताः**।संख्या—परिमाण—पृथक्त्व—संयोग—विभागाः —**उभयेषां** मूर्त्तामूर्त्तानां **गुणाः मताः** । मूर्त्तामूर्त्तगुणत्वं प्रदर्शितगुणानां साधर्म्यमित्यर्थः ॥ ८८ ॥

**संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।**
**द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥**

संयोगो द्वित्वञ्च द्विवृत्तितया ग्राह्यम् त्रित्वचतुष्ट्वादिकं तु त्रिचतुरा-

---

१ मूर्तगुणत्वं मूर्त्तवृत्तिगुणत्वं तच्च संख्यादावतिव्याप्तमित्येवं विवृतम् । नचैतदपि मूर्त्तमात्रवृत्तिसंख्यायामतिव्याप्तमिति वाच्यम् अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य, मूर्त्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । अत्र चाद्ये शून्यान्तेन संख्यादेर्बुद्ध्यादेश्च व्युदासः । वेगस्थितिस्थापकोपग्रहाय संस्कारत्वान्येति । द्वितीयेऽवच्छेदकान्तेन संख्यात्वादेर्वृत्तित्वान्तेन कर्म्मत्वादेर्व्युदासः ॥

२ लक्षणन्तु तावदन्यतमत्वमेवमग्रेऽपि बोध्यम् ॥

३ संख्यादावतिव्याप्तिवारणायैवं विवृतम् । नच तथाप्यमूर्त्तमात्रवृत्तिसंख्यादावतिव्याप्तिरिति वाच्यम् । मूर्त्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य मूर्त्तत्वाभावव्याप्यतावच्छेदकपरिमाणावृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । आद्ये शून्यान्तेन संख्यादिरूपादिव्युदासः । सत्तामादायासम्भववारणाय गुणत्वव्याप्येति ॥ कर्मण्यतिव्याप्तिवारणाय विशेष्यीभूतगुणस्य निवेशः द्वितीये परममहत्त्वत्वजातिमादायातिव्याप्तिवारणाय परिमाणावृत्तीति ।

४ रूपादावतिव्याप्तिवारणायोभयपदम्मूर्त्तामूर्त्तपरतया व्याचष्टे । नचेदं मूर्त्तमात्रवृत्तिसंख्यादावव्याप्तमिति वाच्यम् । कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य, द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वस्य, वा विवक्षितत्वात् ॥

दिवृत्तीति बोध्यम्।—द्विपृथक्त्वादयः। द्वित्वादिसमानाधिकरणं पृथक्त्वम्।—एते संयोगादयः—गुणाः अनेकाश्रिताः अनेकेषु एकत्वभिन्नसंख्याविशिष्टेषु आश्रिताः वृत्तिमन्तः। तथाचानेकाश्रितगुणत्वं ( स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वं ) प्रदर्शितगुणानां साधर्म्यमित्यर्थः॥ ८९॥

**अतः शेषगुणाः सर्वे मता एकैकवृत्तयः।**
**बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः॥ ९०॥**

**अतः** अस्मात् पूर्वोक्तात्—**शेषाः** अवशिष्टाश्च ते—**गुणाश्च** रूप-रस-गन्ध-स्पर्शै-कत्व-परिमाणै-कपृथक्त्व-परत्वा-ऽपरत्व-बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-संस्कारा-ऽदृष्ट-शब्दाः एते सर्वेऽपि—**एकैकवृत्तयः** स्वसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकैकत्वकाः। यद्वा स्वाश्रयाऽन्योन्याभावव्यापकात्यन्ताभावप्रतियोगिनः—**मता** इष्टाः। तथाचोक्तगुणत्वं. प्र. गु. सा. मित्यर्थः॥ **बुद्ध्यादिषट्कं** बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्नाः—**स्पर्शान्ताः** रूप-रस-गन्ध-स्पर्शाः।—**द्रवः** द्रवत्वम्॥ ९०॥

**अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।**
**संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा॥ ९१॥**

**अदृष्टं** धर्म्माधर्म्मौ—**भावना** तदाख्यः संस्कारः—**अमी १६ गुणाः वैशेषिकाः** विशेषाः स्वार्थे विनयादिभ्यश्चेति ठक्प्रत्ययः। विशेषगुणत्वं ( भावनान्य-वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्म्मसमवा-य्यन्यत्वे सति गुरुत्वाजलद्रवत्वाऽन्यगुणत्वं ) प्र. गु. सा. मित्यर्थः॥

---

१ शेषा गुणा इत्यसमस्तः पाठो बहुत्र स च ऋजुरिति मे प्रतिपत्तिः॥

२ भावनान्यो यः वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्म्मसमवायी तदन्यत्वे सति, इत्यर्थः। अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यम् गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय गुरुत्वेत्यादि। सांसिद्धिकद्रवत्वसंग्रहायाजलेति। संयोगादिवारणाय सत्यन्तम्। भावनायामव्याप्तिवारणायाद्यमन्यान्तं-सत्यन्तघटकसमवायिविशेषणम्। सत्तादिकमादायाऽसम्भववारणाय स्पर्शसंग्रहाय च स्पर्शावृत्तीति॥

**संख्यादिरपरत्वान्तः** संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्वानि—**द्रवः** द्रवत्वम्—**असांसिद्धिकः** नैमित्तिकः ॥९१॥

**गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।**
**संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥**

**गुरुत्ववेगौ** गुरुत्वभावनातिरिक्तसंस्कारौ । **एते सामान्यगुणाः प्रकीर्तिताः** । सामान्यगुणत्वं ( रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागद्रवत्वावृत्तिजातिशून्यगुणत्वं ) प्र. गु. सा. मुक्तमित्यर्थः ॥ **स्नेह एव च** अत्रैव शब्दोऽप्यर्थो वेगसंग्रहायोक्तः । स्थितिस्थापकस्य त्वतीन्द्रियत्वं वक्ष्यते ॥ ९२ ॥

**एते तु द्वीन्द्रियग्राह्याः, अथ स्पर्शान्तशब्दकाः ।**
**बाह्यैकैकेन्द्रियग्राह्याः, गुरुत्वादृष्टभावनाः ॥ ९३ ॥**

**एते तु द्वीन्द्रियग्राह्याः** । द्वीन्द्रियग्राह्यत्वं ( चक्षुस्त्वगुभयग्रहणयोग्यत्वं ) प्र० गु० सा मित्यर्थः । **अथ स्पर्शान्तशब्दकाः** । रूप-रस-गन्ध-स्पर्श-शब्दाः ५ **बाह्यैकैकेन्द्रियग्राह्याः** । बाह्यैरेकैकेन्द्रियैश्चक्षुरादिभिरेव—ग्राह्याः । ग्रहणयोग्याः । तथाच चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्त्वं प्र. गु. सा. मित्यर्थः । गुरुत्वम्—अदृष्टं धर्माधर्मौ—भावना । वेगभिन्नसंस्कारो ॥ ९३ ॥

---

१ संख्या आदिर्यस्य अपरत्वमन्ते यस्येति व्युत्पत्त्या परिमाणपरत्वयोरेव ग्रहणमिति भ्रमवारणायादिपदग्राह्यगुणान्विशिष्य दर्शयति-संख्येत्यादिना ।

२ अत्र वेगपदमजहत्स्वार्थलक्षणया भावनातिरिक्तसंस्कारपरं तेन स्थितिस्थापकस्यापि परिग्रहः फलति ।

३ द्रव्यविभाजकोपाधिः पृथिवीत्वादिः तद्व्याप्यतावच्छेदकञ्च गन्धत्वादि तच्छून्यत्वस्य संख्यादौ सत्वाल्लक्षणसमन्वयः ।

४ यथा श्रुतं द्वीन्द्रियग्राह्यत्वं बाह्येन्द्रियद्वयग्राह्यत्वं वा रूपादावतिव्याप्तं तेषां चक्षुर्म्मनोभ्यां चक्षुर्भ्यां वा ग्राह्यत्वात् । अतीन्द्रियसंख्यादावव्याप्तञ्च तत्रेन्द्रियग्राह्यत्वस्यैवाभावादितीत्थं विवृतम् । अस्यापि चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्म्मसमवायिगुणत्वमिति निष्कृष्टोऽर्थः । संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति । कर्म्मादौ तद्वारणाय गुणत्वस्य निवेशः ॥

५ तेन संख्यादौ नातिव्याप्तिस्तेषां चक्षुस्त्वगुभयग्राह्यत्वात् ॥

६ तेन नातीन्द्रियरूपादावव्याप्तिः ।

७ न च त्रसरेणुनिष्ठापकर्षस्य चक्षुरिन्द्रियेणैव ग्राह्यत्वात्तत्रातिव्याप्तिरिति वाच्यम् । परिमाणान्यत्वेनापि गुणस्य विशेषणीयत्वात् ॥

८ भावनापदमजहत्स्वार्थलक्षणयोभयबोधकम् ॥

अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

**अतीन्द्रियाः** । लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्म्मसमवाय्यन्यगुणाः। **विभूनान्तु ये वैशेषिका गुणाः स्युः** बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्म्मा-ऽधर्म-भावना-शब्दाः। **एते तु—अकारणगुणोत्पन्नाः**। कारणगुणैः समवायिकारणसमवेतगुणैः उत्पन्नाः कारणगुणोत्पन्नाः न कारणगुणोत्पन्ना अकारणगुणोत्पन्नाः—**परिकीर्तिताः** । उक्ताः। इत्थंच स्वाश्रयसमवायिसमवेतगुणजन्यत्वं कारणगुणोत्पन्नत्वन्तद्भिन्नत्वमकारणगुणोत्पन्नत्वं[1] प्र०गु०सा०मित्यर्थः ॥ ९४ ॥

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥

पाकाज्जाताः पाकजास्ते न भवन्तीत्यपाकजाः—**स्पर्शान्ताः** रूप-रस-गन्ध-स्पर्शाः—**तथाविधम्**। अपाकजम् ॥ ९५ ॥

स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥

**इति**। पूर्वोक्ता—**एते**। अपाकजरूपादयः। **कारणगुणोद्भवाः स्युः**। कारणगुणोत्पन्नत्वं[2] प्र०गु०सा०मित्यर्थः। अत्रेदं बोध्यम्। पाकजरूप-रस-गन्ध-स्पर्श, पाकजद्रवत्व, द्वित्वादि-द्विपृथक्त्वादिसंयोग-

---

१ अकारणगुणोत्पन्नमात्रवृत्ति-गुणत्वसाक्षाद्व्याप्य-परत्वापरत्वावृत्ति-जातिमत्वमिति निष्कर्षः। तेन नित्ये पाकजे च रूपादौ नातिव्याप्तिः। अकारणगुणोत्पन्नमात्रवृत्तित्वं च निरुक्तकारणगुणोत्पन्नावृत्तित्वम्। गुणत्वसाक्षाद्व्याप्येत्युक्त्या रूपनिष्ठपाकजन्यतावच्छेदकवैजात्यमादाय नातिव्याप्तिः। तत्त्वञ्च संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वं तेन भावनायां नाव्याप्तिः ॥

२ यद्यपि निरुक्तकारणगुणोत्पन्नत्वं हस्तपुस्तकसंयोगविभागजादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तं तथापि स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिजातिमत्त्वे सत्यपाकजत्वमिति तदर्थः। साजात्यं च गुणत्वव्याप्यजात्येत्याद्यन्यत्र* व्यक्तं तत एवावधेयम् ॥

---

* अत्र च संख्यात्वपृथक्त्वातिरिक्तत्वेन भावनावृत्त्यन्यत्वेन च तादृशजातिर्विशेषणीया तेन द्वित्व-पृथक्त्व-भावनासु नातिव्याप्तिः।

विभागपरत्वाऽपरत्वानां न कारणगुणपूर्वकत्वं न वाऽकारणगुणपूर्वकत्वं साधर्म्यमिति ॥ **कर्मजाः** । कर्मजत्वं च कर्मजवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । एवमन्यत्राप्यूह्यम् ॥ ९६ ॥

**स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।**
**भवेदसमवायित्वम्, अथ वैशेषिके गुणे ॥ ९७ ॥**
**आत्मनः स्यान्निमित्तत्वम्, उष्णस्पर्शगुरुत्वयोः ।**
**वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥**

**स्पर्शः** अन्ते येषां ते स्पर्शान्ताः । एकश्च पृथक् चैकपृथक् तयोर्भाव एकपृथक्त्वं स्पर्शान्ताश्च परिमाणं चैकपृथक्त्वं च स्नेहश्च शब्द एव शब्दकश्चेत्येतेषां समाहारद्वन्द्वः । तस्मिन् रूप-रस-गन्ध-स्पर्श-परिमाणै-कत्वै-कपृथक्त्व-स्नेहशब्देषु असमवायित्वं[2] भवेत् । असमवायिकारणत्वं प्र० गु० सा० मित्यर्थः । स्पर्शोऽत्रानुष्णो ग्राह्यः ॥ **अथ** आत्मनः वैशेषिके (विशेषे) गुणे बुद्ध्यादौ निमित्तत्वं निमित्त[3]कारणत्वं स्यात् । तत्त्वं प्र० गु० सा० मित्यर्थः । उ[4]ष्णस्पर्शे गुरुत्वे वेगे द्रवत्वे संयोगे विभागे च ॥ ९७ ॥ ९८ ॥

**द्विधैव कारणत्वं स्याद्, अथ प्रादेशिको भवेत् ।**
**वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥**

**द्विधा** द्विप्रकारेणैव कारणत्व-मसमवायिकारणत्वं निमित्तकारणत्वञ्च स्यात् उक्तद्विविधकारणत्वं प्र०गु०सा० मित्यर्थः ॥ **अथ** वैशेषिको विशेषो

---

१ तेन संयोगजसंयोगे घटादौ च नाव्याप्त्यतिव्याप्ती ॥

२ घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । एवं शब्दस्यापि द्वितीयशब्दं प्रत्यसमवायिकारणत्वम् । एवं स्थितिस्थापकैकपृथक्त्वयोरपि बोध्यम् ।

३ बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः ॥

४ तथाहि अवयवगतोष्णस्पर्शः अवयविगतोष्णस्पर्शस्याऽसमवायी, पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायि, प्रतिघाते निमित्तम् । वेगो वेगस्पन्दयोरसमवायी अभिघाते निमित्तम् । द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि, संग्रहे निमित्तम् । भेरीदण्डसंयोगः शब्दे निमित्तम्, भेर्याकाशसंयोगेऽसमवायी । वंशदलद्वयविभागः शब्दे निमित्तम्, वंशदलाकाशविभागेऽसमवायीति ॥

विभ्वोराकाशात्मनोर्गुणः शब्दो बुद्ध्यादिश्च संयोगः विभागश्च प्रादेशिको व्याप्यवृत्तिर्भवेत् देशिकाव्याप्यवृत्तिगुणत्वव्याप्यजातिमत्त्वम् प्र० गु० सा०मित्यर्थः ॥ ९९ ॥

इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां गुणसाधर्म्यनिरूपणं नाम नवमः परिच्छेदः ॥

---

इदानीं रूपादीन्यथोद्देशं लक्षयति—तत्र तावद्रूपस्य लक्षणमाह—

**चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।**
**चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥**

**चक्षुर्ग्राह्यमिति** । चक्षुर्मात्रग्राह्यजातिमदित्यर्थः । तथाच चक्षुर्मात्रग्राह्यजातिम-(द्गुण)-त्त्वं रूपस्य लक्षणम् ॥ यद्यपि चक्षुर्मात्रग्राह्यत्वं चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् तच्च रूपत्वे न सम्भवति तस्य चक्षुःसंयुक्तसमवेतसमवायग्राह्यत्वान्मनोग्राह्यत्वाच्च तथापि त्वगिन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं तदिति बोध्यम् ॥ एवमग्रेऽपि ॥ अस्योपयोगमाह—**द्रव्यादेरिति** । द्रव्याद्युपलब्धिकारणमित्यर्थः । उपलब्धिः प्रत्यक्षम् ॥ इदमेव विवृणोति—**चक्षुष इति** । सहकारि सहायकम् । द्रव्यगुणकर्म्मसामान्यानां चाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपं कारणम् ॥ तद्भेदमाह—**शुक्लादिकमिति** । तच्च रूपं शुक्लनीलपीतरक्तहरितकर्बुरा[3]दिभेदादनेकप्रकारकं भवति ॥ १०० ॥

**जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।**
**रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥**

**जलादीति** । जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । **अन्यत्** । जल-तेजः-परमाणुरूपभिन्नरूपम् । **सहेतुकम्** । जन्यम् ॥ रसं

---

१ यथाश्रुतं तु कर्म्मादावतिव्याप्तमीश्वरज्ञानादावव्याप्तं चेत्येतदेवाभिप्रेत्य पूर्व-(९६) मेवमन्यत्राप्यूह्यमित्युक्तं दीपिकायाम् ॥

२ संयोगादावतिव्याप्तिवारणाय मात्रपदम् । प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणाय जातिमदिति । अत एव न परमाणुरूपादावव्याप्तिरिति ध्येयम् ।

३ कर्बुरम् चित्रम् । आदिना कपिशः ।

४ पाकेन पृथिवीपरमाणौ रूपान्तरमुत्पद्यते । पाकोनाम रूपादिपरावृत्तिफलको-विजातीय-( विलक्षण-) तेजःसंयोगः । न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते ॥

निरूपयति—**रसस्त्विति** । रसनाग्राह्यः । रसनाग्राह्य-( रसनेन्द्रियजन्यसाक्षात्कारविषय–) गुणविभाजकोपाधिमान् । तत्त्वं रसस्य लक्षणम् । तद्भेदमाह—**मधुरादिरिति** । मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विध इत्यर्थः ॥ १०१ ॥

**सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।**
**घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥**

अस्योपयोगमाह—**सहकारीति** । रसज्ञायाः जिह्वायाः सहकारी सहायकः । रसनजन्यज्ञाने रसः कारणमित्यर्थः । **पूर्ववदिति** । रूपस्यैवेत्यर्थः । जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इति भावः ॥ गन्धं निरूपयति—**घ्राणग्राह्य इति** । घ्राणेन्द्रियजन्यसाक्षात्कारविषयगुणविभाजकोपाधिमानित्यर्थः । तत्त्वं गन्धस्यलक्षणम् । अस्योपयोगमाह—**घ्राणस्यैवोपकारक इति** । घ्राणमात्रजन्यज्ञाने गन्धः कारणमित्यर्थः । गन्धः सर्वोऽप्यनित्य एव ॥ १०२ ॥

**सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।**
**स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥**

**सौरभमिति** । स गन्धः द्वेधा द्विप्रकारकः सौरभं सुरभिः । असौरभमसुरभिः । स्वार्थे प्रज्ञादित्वादण् ॥ स्पर्शं निरूपयति—**स्पर्श इति** । **त्वगिन्द्रियग्राह्यः** । चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधिमान् । तत्त्वं स्पर्शस्य लक्षणम् ॥ अस्योपयोगमाह—**त्वच इत्यादि** । त्वाचप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ एषु विशेषोऽनुपदं वक्ष्यते मूले ॥ १०३ ॥

**अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।**
**काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥**

तद्भेदानाह—**अनुष्णाशीतेत्यादिना** । स स्पर्शः अनुष्णाशीतशीतो-ष्णभेदात्त्रिविधस्त्रिप्रकारको मतः । इष्टः ॥ तत्र पृथिव्या

---

१ तादृशोपाधिमत्त्वम् ।

२ संयोगादावतिव्याप्तिवारणाय चक्षुरग्राह्येति । स्पर्शत्वेतिव्याप्तिवारणाय गुणेत्यादि ।

वायोश्च स्पर्शोऽनुष्णाशीतः । जलस्य शीतः । तेजस उष्णः । का-ठिन्यादि । कठिनत्व-मृदुत्वादि क्षितौ पृथिव्यामेवेत्यर्थः । एतच्च स्पर्शनिष्ठो जातिविशेषः । न त्ववयवसंयोग-(निष्ठो जाति-) विशेषः चक्षुर्ग्राह्यतापत्तेः ॥ पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नस्पर्शास्त्वनित्या इत्यर्थः ॥ १०४ ॥

**एतेषां पाकजत्वं तु क्षितौ, नान्यत्र कुत्रचित् ।**
**तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥**

**एतेषामिति** । रूपरसगन्धस्पर्शानामित्यर्थः । **नान्यत्रेति** । पृथिव्या हि रूपरसगन्धस्पर्श-परावृत्तिरग्निसंयोगादुपलभ्यते न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते, नीरे सौरभमौष्ण्यञ्चान्वयव्यतिरेकाभ्यामौपाधिकमेव पवनपृथिव्योः शीतस्पर्शादिवदिति भावः । **त-त्रापि** । क्षितावपि । **परमाणौ** एव **पाक** इति वैशेषिका वदन्ति । **ते-षामयमाशयः** । अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः । तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटितिव्यूहान्तरोत्पत्तिश्चेति ॥१०५॥

**नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।**
**गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥**

---

१ आरोपितम् ।

२ अवच्छेदकत्वं सप्तम्यर्थः । गृहीत्वा चास्य केशेष्विति वत् । परमाण्ववच्छेदेनैव पृथिवीषु पाकः स्यादित्यक्षरार्थः ॥

३ वैशेषिकानाम् ।

४ वक्ष्यमाणः ।

५ रूपादिपरावृत्तिः ।

६ घटाद्यारम्भककपालादिपरमाणुपर्यन्तेषु अग्निसंयोगेन पूर्वोक्तरीत्या घटादिद्व्यणुकपर्यन्तेषु नाशसम्भवादिति भावः ।

७ कार्यद्रव्यध्वंसविशिष्टेषु ।

८ अत एव संस्थानभेदादिस्तत्र न प्रतीयते ॥

९ व्यूहः संस्थानम् ।

**नैयायिकानामिति** । नैयायिकानान्तुमते द्व्यणुकादावयविन्यपि[1] पाकः इष्यते इष्टः ॥ **तेषामयमाशयः** । अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववयविनावष्टब्धेष्वपि पाको न विरुध्यते वैशेषिकमतेऽनन्तावयवितन्नाशकल्पने गौरवात्[2] । इत्थञ्च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि[3] सङ्गच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत एवेति ॥ संख्यां निरूपयति—**गणनेति** । गणनव्यवहारे अयमेक इमौ द्वौ इमे त्रय इत्याद्याकारकशब्दप्रयोगे हेतुरसाधारणं कारणं संख्येत्यर्थः । तथाच गणनव्यवहारासाधारणकारणत्वं[4] संख्याया लक्षणम् ॥ १०६ ॥

**नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।**
**द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥**

**नित्येष्विति** । नित्येषु परमाण्वादिषु एकत्वं नित्यम् । अनित्ये घटादावेकत्वमनित्यमिष्यते इष्टमित्यर्थः । द्वित्वादयः परार्धपर्यन्ताः[5]

---

१ अपिना परमाणुपरिग्रहः ।

२ अवयविनाशाङ्गीकारेच ।

३ पूर्वावयविनाशे तूत्तरोत्पन्नावयविनि पूर्वावयविनोरभेदाभावेनाभेदावगाहिनी, प्रत्यभिज्ञा न स्यादिति भावः ।

४ कालादावतिव्याप्तिवारणायासाधारणमिति । वस्तुतो गणनं संख्यात्वं तत्प्रयोजको व्यवहारस्तत्प्रकारकं प्रमात्मकं ज्ञानं तद्धेतुस्तद्विषय इत्यर्थान्न कालादावतिव्याप्तिः । तत्रापि संख्यात्वजातिरेव लक्षणमितरत्तु संख्यात्वजातौ प्रमाणतयोक्तम् । एवमग्रेऽपि ध्येयम् ॥

(१) (१.) (१..) (१...) (१....)
५ तथोक्तम् एकं दश शतञ्चैव सहस्रमयुतं तथा ॥
(१.....) (१......) (१.......) (१........)
लक्षञ्च नियुतश्चैव कोटि रर्बुदमेव च ॥ १ ॥
(१.........)(१..........)(१...........)(१............)(१.............)
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्चसागरः ।
(१..............) (१...............) (१................)
अन्त्यं मध्यं परार्धञ्च दशवृद्ध्या यथाक्रमम् ॥ २ ॥ इति,

व्यासज्यवृत्तिसंख्याः अपेक्षाबुद्धिजन्याः। एकत्वान्यसंख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः॥ १०७॥

**अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः।**
**अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः॥ १०८॥**

**अनेकेति।** एते द्वित्वादिपरार्द्धान्ता अनेकाश्रयपर्याप्ताः परिकीर्तिताः। अयमर्थः। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथापि एको द्वाविति प्रत्ययाभावादेको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यत इति॥ **अपेक्षाबुद्धीति।** अयमर्थः। प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो विशेषज्ञानं द्वित्वत्वनिर्विकल्पकात्मकं ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततो द्वित्वनाश इति॥ १०८॥

**अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते।**
**परिमाणं भवेन्मानव्यवहारस्य कारणम्॥ १०९॥**

अपेक्षाबुद्धिः केत्यत आह—**अनेकेति।** अयमेकोऽयमेक इत्याद्याकारिकेत्यर्थः। परिमाणं निरूपयति—**परिमाणमिति।** परिमितिव्यवहारासाधारणकारणत्वं परिमाणस्य लक्षणम्॥ १०९॥

---

१ समुदायत्वावच्छिन्नानुयोगिकपर्याप्तिप्रतियोगिभूतो धर्म्मो व्यासज्यवृत्तिरित्युच्यते। विशेषेण आसज्य (आसमन्तात्सम्बध्य) वर्त्तत इति तदर्थः॥

२ असमवायिकारणन्तु द्वित्वं प्रति समवायिकारणगतयावदेकत्वमिति बोध्यम्॥

३ तथाचानेकाश्रयपर्याप्तेति मूलमसङ्गतम्।

४ नन्वेकत्वस्य न्यूनवृत्तितया द्वित्वाधारतानवच्छेदकत्वान्न तथा प्रत्यय इत्यत आह एको न द्वावितीति। एकत्वावच्छेदेन द्वित्ववद्भेदाभावादेकत्वादेर्न्यूनवृत्तितया द्वित्ववद्भेदानवच्छेदकत्वादिति भावः।

५ उभयाद्याश्रय इत्यर्थः।

६ यद्यपि ज्ञानान्तरं द्विक्षणमात्रस्थायि, योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते अन्यथा निर्विकल्पकालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यान्न तु द्वित्वप्रत्यक्षम् तदानीं विषयाभावात् विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् तस्माद्द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते॥

७ द्रोणः खारी आढकमित्यादि-शब्दप्रयोगः परिमितिव्यवहारस्तस्यासाधारणं कारणं परिमाणमित्यर्थः।

अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥

तद्भेदानाह—अण्वित्यादिना । भावप्रधानो निर्देशः[1] । अणुत्वं दीर्घत्वं महत्त्वं ह्रस्वत्वञ्चेति । इदञ्चातुर्विध्यं[2] प्रत्यक्षसिद्धम् । तत्राणुत्वह्रस्वत्वे महत्त्वदीर्घत्वे च समनियते । तत् । परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते ॥ ११० ॥

संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं, द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥

अनित्यपरिमाणस्योत्पत्तिमाह—संख्यात इति । जायत इत्यत्र परिमाणमित्यनुवर्त्तते । अनित्यमिति पूर्वेणान्वितं । तथाच अनित्यं परिमाणं संख्यामात्रजन्यं परिमाणमात्रजन्यं प्रचयजन्यञ्चेति त्रिविधमित्यर्थः ॥ तत्र संख्यामात्रजन्यमुदाहरति—द्व्यणुकादौ त्विति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् । द्व्यणुकादिपरिमाणन्तु परमाण्वणुत्वापेक्षया नोत्कृष्टम् । त्रसरेणुपरिमाणन्तु न सजातीयं, विजातीयसंयोगरूपः प्रचयस्तु न द्व्यणुकादौ, तत्सत्त्वेऽपि वा तस्याकिञ्चित्करत्वादतः परमाणौ द्वित्वसंख्यामात्रं द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसंख्यामात्रं च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ॥ १११ ॥

परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥
परिमाणं तूलकादौ, नाशस्त्वाश्रयनाशतः ।
संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥

परिमाणमात्रजन्यमुदाहरति—परिमाणमिति । घटादौ[3] घटादि-

---

१ परिमाणस्य गुणिवोधकशब्दैर्विभजनमसङ्गतमित्येवमुक्तम् ॥

२ नन्वणुत्वमेव ह्रस्वत्वं महत्त्वमेव दीर्घत्वञ्चास्तु कुतश्चातुर्विध्यमिति चेन्न तदवधिकाणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाव्यवहारात् तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाव्यवहाराच्च ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया तच्चातुर्विध्यसम्भवात् ॥

३ निष्ठत्वमत्र सप्तम्यर्थः ।

निष्ठम्—तु। **परिमाणं परिमाणजम्**। कपालादिपरिमाणमात्रजन्यम्—**उच्यते** कथ्यते॥ प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति—**प्रचय इति**। शिथिलाख्यो यः संयोगः स प्रचयः। शिथिलत्वं च संयोगगतो जातिविशेषः। किञ्चिदवयवावच्छेदेनावयान्तरासंयोगिनि महत्यवयवे वर्त्तमानः संयोगः प्रचय इत्येके[1]॥ **तेन तूलकादौ**, तूलकालादिनिष्ठं—**परिमाणं जन्यते**॥ परिमाणञ्चाश्रयनाशादेव नश्यतीत्याह—**नाश इति**। अर्थात् परिमाणस्यैव॥ पृथक्त्वम् निरूपयति—**संख्यावदिति**। पृथक्[2]प्रत्ययासाधारणं कारणं पृथक्त्वम्। तन्नित्यतादिकं संख्यावत् यथाहि नित्येष्वेकत्वं नित्यमनित्येत्वनित्यम्। अनित्यमेकत्वमाश्रयद्वितीयक्षणे चोत्पद्यते आश्रयनाशान्नश्यति। तथैक[3]पृथक्त्वमपि। द्वित्वादिर्वच[4] द्विपृथक्त्वादिकमपीत्यर्थः॥ ११२॥ ११३॥

**अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते।**
**अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा॥ ११४॥**

नन्वयमस्मात्पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणा-

---

१ अत्र महत्पदं न देयं परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहादित्यन्ये। भूयोवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्त्तमानः संयोगः प्रचयस्तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इत्यपरे। अत्र प्रचयरहितैस्त्रिभिर्महावयवैरारब्धस्य यन्महत्परिमाणं तत्संख्यापरिमाणोभयजन्यम् महदवयवारब्धमहत्त्वादतिशयितत्वात्। अल्पावयवारब्धमहत्त्वादतिशयितत्वाच्च। प्रचिताभ्यां महावयवाभ्यामारब्धे यन्महत्परिमाणमतिशयितं तत्परिमाणप्रचयोभयजन्यम् अप्रचितमहावयवारब्धात्र्यणुकमहत्त्वाच्च तादृशातिशयदर्शनात्। प्रचितैर्महद्भिरारब्धस्य महत्परिमाणं संख्यापरिमाणप्रचयजन्यं प्रचितमहावयवारब्धमहत्त्वादपि तस्योत्कृष्टत्वादिति ध्येयम् दिङ्मात्रस्य मूलेप्रर्शितत्वात्॥

२ अयमस्मात्पृथगिति यः प्रत्ययो ज्ञानं तत्प्रति यदसाधारणं कारणं तदेव पृथक्त्वमित्यर्थः॥

३ एकसमवेतपृथक्त्वम्॥

४ तथाच, द्विपृथक्त्वादौ समानाधिकरणान्येकपृथक्त्वान्यसमवायिकारणानि, इदमेकं पृथक् इदमेकं पृथगिति नानैकपृथक्त्वविषयिण्यपेक्षाबुद्धिर्निमित्तकारणम्। तादृशबुद्धिनाशात्क्वचिदाश्रयनाशात्कदाचिदुभाभ्यां पृथक्त्वं नश्यतीति भावः॥ अत्रोभयसमवेतं पृथक्त्वं द्विपृथक्त्वं, त्रितयसमवेतं पृथक्त्वं त्रिपृथक्त्वमितिरीत्यावोध्यम्॥

न्तरं स्वीक्रियते। नचास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्। रूपं न घट इति प्रतीत्यनापत्तेः। नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकं पृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्य- इत्यत आह—**अन्योन्याभाववत इति**। अस्य पृथक्त्वस्य अन्योन्याभावतोऽन्योन्याभावेन चरितार्थत्वं कृतार्थत्वं सिद्धप्रयोजनकत्वमिति यावत् नेष्यते नेष्टम् हि यतः 'अस्मात् पृथक्' 'इदं न' इति प्रतीतिर्विलक्षणान्योऽन्यव्यावृत्तरूपा। ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेन्न अर्थभेदं विना घटात्पृथगितिवद्घटोनेत्यत्रापि पञ्चमीप्रसङ्गात्। तस्माद्यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थोऽन्योन्याभावतो भिन्नो गुणान्तरमिति कल्प्यत इति ॥ ११४ ॥

**अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः।**
**कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥**

संयोगं निरूपयति **अप्राप्तयोस्त्विति**। प्राप्तिः सम्बन्धः सच समवायोऽपीत्यत उक्तमप्राप्तयोरिति,। लक्षणन्तु संयुक्तव्यवहारासाधारणहेतुत्वम्। तं विभजते **कीर्तितइति**। एष संयोगः तिस्रो विधा अस्येति त्रिविधस्त्रिप्रकारः कीर्त्तितः उक्तस्तत्र अन्यतरकर्मजः एकतरक्रियाजन्य आद्यः ॥ ११५ ॥

**तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः।**
**आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥**

**तथेति**। तथोभयक्रियाजन्य इति प्रचुरः पाठः। तथोभयस्पन्दजन्य इति तु क्वचिदेव। उभयोः क्रियातो जन्यस्तथा-द्वितीयः। संयोगजः अपरस्तृतीयः भवेत्। तत्र **श्येनः** बाजशिकरेत्येवं शब्दैः प्रसिद्धः पक्षिविशेषः

---

१ सामानाधिकरण्यरूपपरम्परासम्बन्धविषयकत्वमुक्तप्रतीतेः कल्प्यमित्यर्थः। अयं भावः। यथैकं रूपं रसात्पृथगित्यादौ स्वसमवायिसमवेतत्वमेकत्वपृथक्त्वयो रूपेण सह परम्परासम्बन्धः सामानाधिकरण्यनिर्वाहकस्तथेहापीति ॥

२ अन्योन्याभावार्थकपदयोगस्य पञ्चमीप्रयोजकस्य तत्र सत्त्वादिति भावः ॥

३ इमौ संयुक्तौ इति यो व्यवहारस्तदसाधारणहेतुत्वं संयोगस्य लक्षणम् ॥

४ अयं चाव्याप्यवृत्तिः। स्वात्यन्ताभावसमानाधिकरणत्व- (स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसम्बन्धेनाभाववत्त्व-) मव्याप्यवृत्तित्वम् ॥

अयञ्चोपलक्षणविधयाऽन्येषामपि क्रियावतां पतत्रिणां बोधकः अस्य शैलादिनाऽक्रियेण संयोगः आदिमः अन्यतरकर्मज इत्यर्थः ॥ ११६ ॥

मेषयोः संनिपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥

मेषयोरिति। सन्निपातः संयोगः । द्वितीयः उभयकर्मजः॥११७॥

तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥

तृतीय इति । संयोगज इत्यर्थः । तृतीयः स्यादिति च पूर्वेणान्वितम् ॥ कर्मजोऽपि उक्तद्विविधकर्मजसंयोगोऽपि अभिघातः नोदनं चेत्येते द्विधैव प्रत्येकं द्विप्रकारक एव परिकीर्त्तित उक्तः॥ इह अनयो मध्ये आदिमः अभिघाताख्यः शब्दहेतुः ॥ ११८ ॥

शब्दाहेतुर्द्वितीयः स्याद्, विभागोऽपि त्रिधा भवेत् ।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥

शब्दाहेतुरिति । द्वितीयो नोदनाख्यः संयोगः ॥ विभक्तप्रत्ययासाधारणं कारणं विभागं निरूपयति—विभागोऽपीति । तद्भेदानाह एकेत्यादिना, अपरः द्वितीयः । उदाहरणन्तु श्येनशैलविभागादिकं[1] पूर्ववत् ( संयोगवत् ) बोध्यम् ॥ ११९ ॥

विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् ।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥

तृतीयोऽपि विभागजोऽपि हेतुमात्रविभागोत्थः कारणमात्रविभागजन्यः । हेत्वहेतुविभागजः कारणाकारणविभागजन्यश्चेति । आद्यो द्व्यणुकवति परमाणौ उत्पन्नेन कर्मणा परमाणुद्वयविभागपूर्वकः परमाण्वाकाशविभागः । द्वितीयस्तु हस्ततरुविभागजः कायतरुविभागः[2] ॥ १२० ॥

---

१ आदिना मेषयोर्विभागो द्वितीयः, कपालतरुविभागात्तरुकुम्भविभागस्तृतीय इत्येवम् ॥

२ अयमप्यव्याप्यवृत्तिरिति बोध्यम् ॥

**परत्वं चापरत्वं च द्विविधं परिकीर्तितम् ।**
**दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥**
**परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् ।**
**अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥**

परापरव्यवहारकारणे परत्वापरत्वे निरूपयति—**परत्वंचेति** । दैशिकं[1] परत्वं मूर्त्त एवेत्यन्वयः । **विभुद्रव्ये** विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धेर्निमित्तकारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावादिति भावः । तच्च मूर्तसंयोगभूयस्त्वज्ञानतः बहुतरमूर्त्तसंयोगान्तरितत्वज्ञानरूपनिमित्तकारणात्[2] । एवमपरत्वं **तदल्पत्वबुद्धितः** अल्पतरमूर्त्तसंयोगान्तरितत्वज्ञानरूपनिमित्तकारणात्[3] । अत्रावधित्वार्थे पञ्चम्यपेक्षा । यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः । पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥ १२२ ॥

**तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।**
**दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥**

**तयोरिति** । दैशिकपरत्वापरत्वयोरित्यर्थः । **असमवायी** । असमवायिकारणम् ॥ **तदाश्रये** दैशिकपरत्वापरत्वाश्रये यो दिक्संयोगः स इत्यर्थः भवेदित्यस्यपरत्व—मितिपरेणान्वयः ॥ १२३ ॥

**परत्व, मपरत्वं तु तदीयाल्पत्वबुद्धितः ।**
**अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥**

**परत्वमिति** । कालिकमित्यादिः । इदंच पूर्वान्वयि । अयमर्थः । यस्य ( यत्सम्बन्धि-) सूर्यपरिस्पन्दापेक्षया यस्य ( यत्सम्बन्धि- ) सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः । यस्य न्यूनः स कनिष्ठ इति ॥ कालिकपरत्वापरत्वे जन्ये एव वर्तेते[4] ॥ अत्र कालिकपरत्वापरत्वयोः ॥ १२४॥

---

१ दैशिकं परत्वंच ।

२ बहुतरमूर्त्तसंयोगान्तरितत्वमेव विप्रकृष्टत्वं तद्विषयिण्यपेक्षाबुद्धिर्दैशिकपरत्वं प्रति निमित्तकारणमित्यर्थः ।

३ अल्पतरमूर्त्तसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्दैशिकापरत्वंप्रति निमित्तकारणमित्यर्थः ।

४ नित्ये पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारणस्य कालसंयोगरूपाऽसमवायिकारणस्य चाभावादिति भावः ॥

अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।
बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥

अपेक्षाबुद्धिनाशेनेति । स्वनिमित्तकारणविप्रकृष्टत्वादिबुद्धीनां नाशेनेत्यर्थः ॥ तेषाम् दैशिककालिकपरत्वापरत्वानाम् ॥ अथ क्रमप्राप्तां बुद्धिं निरूपयितुमाह—बुद्धेरिति ॥ प्रपञ्चः विस्तारः ॥ १२५ ॥

अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥

ज्ञानम् अनुभव[1]रूपम् ॥ १२६ ॥

तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥

अप्र[2]मां निरूपयति—तच्छून्य इति ॥ तेन शून्यस्तच्छून्यस्तस्मिंस्तच्छून्ये । शून्योऽभाववान् । प्रतियोगिकत्वं ( प्रतियोगितानिरूपकत्वं ) तृतीयार्थः । सप्तम्यर्थो विशेष्यित्वम् ( विशेष्यतानिरूपकत्वम् ) आश्रयतासम्बन्धेन मत्यन्वयी । एवं तस्य मतिस्तन्मतिरित्यत्र प्रकारित्वं ( प्रकारतानिरूपकत्वं ) षष्ठ्यर्थः । मतिर्ज्ञानमनुभव इति यावत् । तत्पदेन ज्ञानप्रकारीभूतो धर्मो धर्त्तव्यः । तथाच तच्छून्ये तन्मतिरित्यस्य तदभाव[3]वद्विशेष्यकत्वे सति तत्प्रकारकत्वविशिष्टं ज्ञानमित्यर्थः ।

---

१ यथार्थानुभवस्यैव प्रमापदव्यवहार्यतया प्रसिद्धेः । यद्यपि स्मृतेरपि यथार्थायथार्थभेदेन द्वैविध्यमन्यत्र व्युत्पादितं तथापीह मूले स्मृतेर्विशिष्याविवृतत्वेऽपि स्मृतिप्रक्रियायां पूर्वं व्याख्यातमित्यनुसन्धेयम् ॥

२ अयथार्थानुभवम् ।

३ तन्निष्ठप्रतियोगितानिरूपकाभाववन्निष्ठविशेष्यतानिरूपकत्वाश्रयत्वे सतीत्यर्थः । एतच्च प्रमायामतिव्याप्तिवारणाय, तदभाववद्विशेष्यकतदभावप्रकारकप्रमायामतिव्याप्तिवारणाय तत्प्रकारकेति, तन्निष्ठप्रकारतानिरूपकेति तदर्थः । इच्छायामतिव्याप्तिवारणाय ज्ञानमिति, सतिसप्तम्याश्चावच्छिन्नत्वमर्थः । एकधर्मिनिष्ठयोर्विषयतयोर्विषयितयोर्वाऽवच्छेद्यावच्छेदकभावनियमः । तत्रापि ययोर्विषयतयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभाव इति सिद्धान्तः । प्रकृते च विशेष्यित्वप्रकारित्वयोरवच्छेद्यावच्छेदकभावविवक्षणेन इमे रङ्गरजते इत्याकारकप्रमायां रङ्गत्वाद्यभाववद्रजतादिविशेष्यकत्वरङ्गत्वादिप्रकारकत्वयोः सत्वेऽपि नातिव्याप्तिः ॥

तत्त्वमप्रमाया लक्षणम् । वस्तुतस्तु[2] तत्सम्बन्धावच्छिन्नप्रतियोगिताक-तदभाववान्यस्तद्विशेष्यकत्वावच्छिन्नतत्सम्बन्धावच्छिन्नतत्प्रकारकत्ववि-शिष्टानुभवत्वं तत्त्वम् ॥ **तत्प्रपञ्चः** । अप्रमाप्रपञ्चः । **विपर्यासः** । विपर्ययः । **संशयोऽपीति** । अपिना तर्कस्वप्नाविति कश्चित्तन्न, तयो-र्मानसविपर्ययरूपत्वात् ॥ स्वप्नो हि मिद्धानाडीरूपप्रदेशविशेषे मनःसंयोगे-सति भवति, तर्कलक्षणं तत्रैव (१३७ का०) प्रसङ्गाद्वक्ष्यते ॥ १२७ ॥

**आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।**
**भवेन्निश्चयरूपा या, संशयोऽथ प्रदर्श्यते ॥ १२८ ॥**

**आद्य इति** । विपर्यास इत्यर्थः । तत्स्वरूपमाह **देहेष्विति** । **देहेषु** । शरीरादौ या **आत्मबुद्धिः** । आत्मत्वप्रकारकं ज्ञानं गौरोऽहं कृशोऽह मित्याद्याकारकमेवं—**शङ्खादौ** पीततायाः मतिः **पीततामतिः** । प्रका-रित्वं षष्ठ्यर्थः पीतत्वप्रकारकं पीतः शङ्ख इत्याकारकं ज्ञानं **निश्चयरूपा** निश्चयात्मकम् सः । एवंच तदभाववति तत्प्रकारकनिश्चयत्वं विपर्या-सस्य लक्षणम्—**अथ संशयः** । संशयोदाहरणं **प्रदर्श्यते** उत्तरपद्या-र्धेनेति भावः ॥ १२८ ॥

**किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।**
**तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥**

**किंस्विदिति** । वितर्केऽयं निपातसमुदायः । **स्थाणुः** छिन्नविट-पस्य[3] वृक्षस्य प्रकाण्डः । निश्चयस्य लक्षणमाह—**तदभावेति** । तदभावा-

---

१ तादृशज्ञानत्वम् ।

२ नन्विदं संयोगीति प्रमायामतिव्याप्तं संयोगाभाववति संयोगप्रकारकत्वस-त्वादिति चेन्न, यदवच्छेदेन यत्सम्बन्धावच्छिन्नप्रतियोगिताकयदभावस्तदवच्छेदेन तेन सम्बन्धेन तत्प्रकारकानुभवस्य विवक्षितत्वात् संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् । संयोगावच्छेदकावच्छेदेन समवायसम्बन्धेन संयोगस्य सत्वात् । एतच्चाव्याप्यवृत्तिसंयोगादिप्रकारकभ्रमानुरोधेनोक्तम् व्याप्यवृत्तिरजतत्वादि-प्रकारकभ्रमलक्षणमाह—वस्तुतस्त्विति, प्रतियोगितायां प्रकारतावच्छेदकसम्बन्धाव-च्छिन्नत्वनिवेशफलं तु पर्वतो वह्निमानिति प्रमायां समवायावच्छिन्नवन्ह्यभाववत्पर्व-तविशेष्यकत्वसत्वेऽपि नातिव्याप्तिरिति ।

३ विस्तारो विटपोऽस्त्रियामित्यमरः । अत्र विस्तारः शाखापल्लवसमुदायलक्षण आ-भोगः । स एव विटप इत्युच्यते ।

प्रकारा तत्प्रकारा धीस्तु निश्चय इत्यन्वयः॥ तथाच तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वं निश्चयस्य लक्षणम्॥ १२९॥

**स संशयो मतिर्या स्यादेकत्राभावभावयोः।**
**साधारणादिधर्मस्य ज्ञानं संशयकारणम्॥ १३०॥**

संशयं लक्षयति—**स संशय इति**। **एकत्र** एकस्मिन्धर्मिणि विशेष्यित्वं सप्तम्यर्थः। एकधर्मिविशेष्यताकमित्येकत्रेत्यस्यार्थः। **अभावभावयोः** प्रकारित्वं षष्ठ्यर्थः विरुद्धभावाभावोभयप्रकारकं ज्ञानं संशय इत्यर्थः। तथाचैकधर्म्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्न-विरुद्धभावाभावोभयप्रकारकत्वे सति ज्ञानत्वं संशयस्य लक्षणमिति फलितम्॥ संशयस्य कारणमाह—**साधारणेति**। उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम् यथोच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वाऽयं स्थाणुर्नवेति सन्दिग्धे[४]॥ एवमसाधारणधर्मज्ञानमपि संशयकारणम्। एतदर्थमेवादिपदम्। यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे॥ विप्रतिपत्तिस्तु शब्दो नित्यो नवेति शब्दात्मिका न संशयकारणम्[५]॥ १३०॥

**दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्।**
**पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः[६]॥ १३१॥**

---

१ एतच्च संशयेऽतिव्याप्तिवारणाय, अत्र च तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वमेव तन्निश्चयत्वं, न तु यथाश्रुतम् महानसोऽयं वह्निमान्न वा पर्वतो वह्निमानित्यस्य पर्वते वह्निनिश्चयत्वानापत्तेः। ज्ञानपदं चेच्छायामतिव्याप्तिवारणाय।

२ ह्रदपर्वतौ वह्नितदभाववन्ताविति ज्ञानेऽतिव्याप्तिवारणाय।

३ अत्र पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदिति ज्ञानव्युदासायावच्छिन्नान्तम्। वृक्षसंयोगवांस्तदभाववाँश्चेति समुच्चयवारणाय विरुद्धेति, विरोधावगाहित्वं तदर्थः। घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति। इच्छाव्युदासार्थं विशेष्यभागः। वस्तुतस्तु स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयम्॥

४ क्रियापदम्। सन्देहवान्भवतीत्यर्थः। एवमग्रेऽपि॥

५ शब्द-व्याप्तिज्ञानाऽतिदेशवाक्यार्थज्ञानानां निश्चयमात्रजनकत्वस्वाभाव्यात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जायते पश्चात्संशयः सोऽपि मानस एवेति॥

६ धो मतः इति पा०

अप्रमाप्रमयोः कारणमाह—**दोष इति** । अप्रमां प्रति दोषः कारणम् । प्रमां प्रति गुणः कारणम् । तत्र दोषाः के इत्याकाङ्क्षायामाह—**पित्तदूरत्वादीति** । **आदिना** मण्डूकवशाञ्जनम् । **नानाविधः** अननुगतः । अस्य कारणत्वमन्वयव्यतिरेकाभ्यामेव सिद्धम् । गुणस्य तु अनुमानात् तद्यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वादप्रमावत् ॥ तथाच क्वचिच्छङ्खादौ पीतत्वादिभ्रमे पित्तं दोषः । क्वचिच्चन्द्रादेः स्वरूपपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवशाञ्जनं दोष इत्येवं दोषो भ्रान्तिजनक इति बोध्यम् ॥ १३१ ॥

**प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।**
**संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥**
**पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।**
**शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥**
**शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।**
**गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥**

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान्दर्शयति **प्रत्यक्षे त्विति** ॥ प्रत्यक्षे तु विशेषवता विशेष्येण समं (सह) सन्निकर्षो गुणः स्यात् । तुरेकः पादपूरणे । **अथ पुनः**[1] अथ चानुमितौ—**साध्यविशिष्टे** साध्यवति पक्षे **परामर्शः** साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः अत्र तुद्वयं पादपूरणे । **उपमितौ** तु शक्ये सादृश्यज्ञानं गुणः । **अथ शाब्दबोधे** योग्यतायास्तात्पर्यस्य वा प्रमैव गुणः स्यादित्यर्थः ॥ प्रमां निरूपयति—**भ्रमभिन्नमिति** । उक्तभ्रमभिन्नं ज्ञानं प्रमेत्युच्यत इत्यर्थः ॥ १३२ ॥ १३३ ॥ १३४ ॥

**अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।**
**तत्प्रमा, न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥**

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह—**अथ वेति** । तद्वद्विशेष्यकं तत्प्रकारकं यज्ज्ञानं तत्प्रमेत्यन्वयस्तथाच तद्वद्विशेष्य-

---

१ पुनरिति चार्थे वाक्यालङ्कारे ।

कत्वे सति[1] तत्प्रकारकत्ववज्ज्ञानत्वं प्रमाया लक्षणम्। अत्र येन सम्बन्धेन यद्वत्त्वं तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तत्प्रकारकत्वं च वाच्यम् तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः। नन्वेवं[2] सति निर्विकल्पकं प्रमा न स्यात्तस्य सप्रकारकत्वाभावादत आह—**न प्रमेति** ॥ १३५ ॥

**प्रकारतादिशून्यं हि संबन्धानवगाहि तत्।**
**प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥**

निर्विकल्पकस्य लक्षणमाह—**प्रकारतादी**त्यर्धेन। आदिना विशेष्यतासंसर्गते, प्रकारतादिविधया प्रकाराद्यनवगाहि ज्ञानं **तत्** निर्विकल्पकमित्यर्थः। तथाच ज्ञानत्वघटितं विशेषणताशून्यत्वं विशेष्यताशून्यत्वं संसर्गताशून्यत्वं चेति लक्षणत्रयं पर्यवसितम् ॥ **प्रमात्वमिति**। मीमांसका हि प्रमात्वं ( तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् ) स्वतोग्राह्यमिति[3] वदन्ति, स्वतोग्राह्यत्वं च ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वम्। सामग्री च मतभेदेन व्यवसायादिकम्[4]। तज्ज्ञानविषयकज्ञानेन च तज्ज्ञा-

---

१ सतिसप्तम्या अवच्छिन्नत्वार्थकत्वात्तद्वद्विशेष्यकत्वावच्छिन्नेति सत्यन्तार्थः। तत्पदेन च ज्ञानप्रकारीभूतो धर्मो ग्राह्यः। तद्वत्त्वं च प्रकारतावच्छेदकसम्बन्धेन समवायादिना विवक्षणीयम्। तेन कालिकसम्बन्धेन शुक्त्यादौ रजतत्वसत्त्वेऽपि इदं रजतमिति भ्रमे नातिव्याप्तिरत एव च तद्वद्विशेष्यकेति, रजत एव द्रव्यमिति ज्ञाने रजतत्वप्रमात्वापत्तिरतस्तत्प्रकारकेति, स ( रजतत्वादिः ) प्रकारः ( विषयितास्वनिष्ठविषयतानिरूपकता-सम्बन्धेन ) यस्मिन् ( ज्ञाने ) तत्तत्प्रकारकं तस्य भावस्तत्त्वम्। विशेष्यकत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावविवक्षणाच्च रङ्गत्वेन रजतावगाहिनि, रजतत्वेन च रङ्गावगाहिनि "इमे रङ्गरजते इति" समूहालम्बन*भ्रमे नातिव्याप्तिः।तत्र रङ्गत्ववद्रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः, रजतत्ववद्रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोः सत्त्वेऽपि रङ्गत्वप्रकारतायां रङ्गविशेष्यतानिरूपितत्वस्य, रजतत्वप्रकारतायां च रजतविशेष्यतानिरूपितत्वस्यासत्त्वेन रङ्गविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्व-रजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोरभावात्। ज्ञानपदञ्च तथाविधेच्छायामतिव्याप्तिवारणाय ॥

२ तत्प्रकारकत्वस्य प्रमात्वघटकत्वे सति ॥

३ स्वस्मात्स्वकीयाच्च ग्राह्यमित्यर्थः ॥

४ गुरुमते व्यवसायात्मिका, मिश्रमते अनुव्यवसायात्मिका, भट्टमते ज्ञाततालिङ्गिकेतिस्पष्टमन्यत्र ॥

---

*एकनालावलम्बिफलद्वयन्यायेन, परस्परं निरूप्यनिरूपकभावानापन्नविषयताद्वयनिरूपकं ज्ञानं समूहालम्बनात्मकम् ॥

न प्रामाण्यं गृह्यते इत्याहुस्तन्मतं दूषयति—**न स्वतो ग्राह्यमिति** । किन्तु परतोग्राह्यम् अनुमानादिजन्यग्रहविषय इत्यर्थः । अत्र हेतुमाह—**संशयेति** । यदि ज्ञानप्रामाण्यं स्वतोग्राह्यं स्यात्तदाऽनभ्यासदशायां[1] दूरावलोकिते वारिणि "जलज्ञानं प्रमा नवे" —त्याकारकोऽनुभवसिद्धः प्रमात्वसंशयो न स्यात् अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात् तस्मात्[2] ज्ञानप्रामाण्यमनुमेयम् । तथाहि—प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति "पूर्वोत्पन्नं ज्ञानं प्रमा, समर्थप्रवृत्ति[3]जनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमे"ति व्यतिरेकव्याप्तिमता प्रमात्वमनुमीयते । द्वितीयादिजलज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्व[4]लिङ्गेनान्वयव्यतिरेकिणाऽपि प्रामाण्यमनुमीयते ॥ १३६ ॥

**व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।**
**हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥**

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न प्रदर्शित इत्यतस्तं दर्शयति—**व्यभिचारस्येति** । अपिशब्दश्चार्थे व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे हेतुः कारणमित्यर्थः । तथाशब्द उभयोः समानबलकत्वं द्योतयति । व्यभिचारग्रहस्य[5] व्याप्तिग्रहप्रतिबन्धकत्वात्तदभावः कारणम् । एवमन्वयव्यतिरेकाभ्यां[6] सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणं व्यभिचारास्फूर्तौ[7] सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात्[8] । क्वचित्तु[9] व्यभिचारशङ्कानिवर्त्तनद्वारा भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र तन्निवर्त्तकतया तर्कोऽपेक्षित इत्याह—**तर्क इति** । व्याप्यारोपेण

---

१ प्राथमिकजलज्ञानग्रहोत्तरदशायाम् ॥

२ अनभ्यासदशायां संशयानुभवात् ॥

३ तद्वद्विशेष्यकतत्प्रकारकप्रवृत्तीत्यर्थः ॥

४ पूर्वज्ञानसजातीयत्वरूपलिङ्गेन, समर्थप्रवृत्तिजनकत्वेनेति यावत् ॥

५ अनेन व्यभिचारग्रहस्य व्याप्तिग्राहकतामुपपादयति ॥

६ सहचारग्रहस्य व्याप्तिग्राहकतामुपपादयत्यनेन ॥

७ स्फूर्तिः स्मरणम् ॥

८ अनेन व्यतिरेकव्यभिचारमाह ॥

९ भूयोदर्शनस्याहेतुत्वेऽपि क्वचित्प्रयोजकतया तदादर इत्याह क्वचित्त्विति ॥

व्यापकारोपः सः। तथाहि "पर्वतो वह्निमान्धूमाद्यो यो धूमवान्स स वह्निमान्यथा महानसम्" इति सद्धेतुकानुमानस्थले, वह्निविरहिण्यपि पर्वते कदाचिद्धूमः स्यादिति यदि कस्यचिदाशङ्का भवेत्तदा सा वह्निधूमयोः कार्यकारणभावप्रतिसन्धानरूपतर्कान्निवर्त्तते, यदि धूमो वह्निर्व्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति हि तर्काकारः॥ १३७॥

**साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा।**
**स उपाधिर्भवे,-त्तस्य निष्कर्षोऽयं प्रदर्श्यते॥ १३८॥**

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति—**साध्यस्येति**। साध्यत्वेनाभिमतस्येत्यर्थः। हेतोः हेतुत्वेनाभिमतस्य। तथाच साध्यत्वाभिमताव्यापकत्वे सति साधनत्वाभिमताव्यापको यः स उपाधि-

---

१ व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते, तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥ अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते, साध्याभावोऽन्यथाव्याप्यो व्यापकः साधनात्ययः॥ इति आनुभविकोक्तेर्वह्न्यभावो व्याप्यो धूमाभावश्च व्यापकः। तथाच यदि वह्निर्न स्यात्तदा धूमोऽपि न स्यात्तयोः कार्यकारणभावादिति तर्केण वह्न्यभावारोपेण धूमाभाव आरोप्यते इति लक्षणसमन्वयो बोध्यः॥ आहार्यव्याप्यवत्ताभ्रमजन्य *आहार्यव्यापकवत्ताभ्रमस्तर्क इति तु निष्कृष्टलक्षणम्॥

२ वह्न्यभाववद्वृत्तिः॥

३ कारणं विना कार्यानुत्पत्तेः॥ यदि क्वचित् "कारणं विनापि कार्यं भविष्यति" "अहेतुक एव भविष्यति" इति तत्रापि (तादृशतर्ककारणीभूतकार्यकारणभावग्रहेऽपि) शङ्का प्रतिबन्धिका भवेत् तदा सा व्याघातादपसारणीया, व्याघातश्च यदि कारणं विना कार्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति॥

४ व्याप्तिग्रहोपायनिरूपणानन्तरं व्याप्तिनिश्चयाभावप्रयोजकव्यभिचारशङ्काकारणज्ञानविषयत्वेनोपाधेः स्मरणे सति, तथाच प्रसङ्गसङ्गत्योपाधिनिरूपणमितिभावः॥

५ सिद्धिविषयत्वरूपसाध्यत्वस्य सिद्धिजनकत्वरूपसाधनत्वस्य च सोपाधावभावादभिमतेत्युक्तम्। यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः। यथाश्रुतेऽभिमतस्य विशेषणत्वे यत्र

---

*आहार्यतज्ज्ञानमात्रेऽतिप्रसङ्गवारणाय जन्यान्तम्, नायं पुरुष इति निश्चयसत्वे शाखादौ करादिभ्रमादयं पुरुष इत्याहार्यारोपः। तत्रातिव्याप्तिवारणाय प्रथममाहार्यपदम्। रजतत्वव्याप्याभाववत्ताग्रहकाले आहार्यं यद्रजतत्वव्याप्यवत्ताज्ञानं तज्जन्ये इदं रजतमित्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम्। तर्के आपाद्यव्यतिरेकनिश्चय आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणमिति ध्येयम्॥

र्भवेदित्यर्थः । अस्यापि यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्माव-च्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यम् । तेन वायुः प्रत्यक्षः स्पर्शाश्र-यत्वादित्यत्रोद्भूतरूपवत्वस्योपाधित्वमुपपन्नं, तद्धि पक्षधर्मबहिर्द्रव्यत्वाव-च्छिन्नप्रत्यक्षत्वस्य व्यापकं बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च, एवं स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं तदवच्छिन्नसाधनाव्यापकं च शाकपाकजत्वमुपाधिरित्येवमन्यत्र द्रष्टव्यम् ॥ अयंच चतुर्विधतयाऽन्यत्र वर्णित इह तु प्रपञ्चभिया स्पष्टं न दर्शितः ॥ १३८ ॥

**सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।**
**हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥**

अतएव लक्ष्यमपि रूपमेतदनुसारेण दर्शयति—सर्वे इति । येषा-मुपाधीनां हेतोः प्रकृतहेतोः एकस्मिन्नप्याश्रये स्वमुपाधिः स्वं च साध्यञ्च स्वसाध्ये तयोर्व्यभिचरिता भवति ते सर्वे उपाधयः साध्य समानाधिकरणाः साध्याधिकरणवृत्तयः स्युरित्यर्थः ॥ १३९ ॥

**व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।**
**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥**

---

न तदभिमानस्तत्राव्याप्तिः स्यात् । यदवच्छिन्नविवक्षणाच्च गुणकर्मान्यत्वविशि-ष्टसत्तावान् जातिमत्त्वादित्यादौ, संयोगी गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ च नाव्याप्त्यतिव्याप्ती ॥ व्यापकत्वाव्यापकत्वे एकप्रकारेणैकसम्बन्धेन च विवक्षिते तेन द्रव्यत्वत्वेन समवायसम्बन्धेन च वह्निं प्रति व्यापकस्य द्रव्यत्वस्य द्वित्वादिना संयो-गादिसम्बन्धेन च धूमं प्रत्यव्यापकत्वेऽपि वह्निमान्धूमादित्यत्र द्रव्यत्वादौ नातिव्याप्तिः ॥

१ केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः । साधनावच्छिन्नसाध्यव्या-पकः उदा*सीनधर्मावच्छिन्नसाध्यव्यापकश्च, आद्य आर्द्रेन्धनसंयोगः । द्वितीयो यथा वायुः प्रत्यक्षः प्रमेयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपव-त्त्वम् । तृतीयो यथा ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थस्तु प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्व-व्यापकं भावत्वम् ॥

२ यद्धर्म्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव ॥

३ निरुक्तलक्षणानुसारेण ॥

---

*पक्षधर्म्मसाधनधर्म्माभ्यां भिन्नेत्यर्थः ॥

अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४१ ॥

उपाधेर्दूषकताबीजमाह—व्यभिचारस्येति । उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः ॥ तथाहि—यत्र शुद्धसाध्यव्यापक उपाधिः तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान्वह्नेरित्यादौ वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वात् इत्यत्र मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारादिति ॥ शब्दोपमानयोरिति ॥ वैशेषिका हि प्रत्यक्षमनुमानं च प्रमाणं, शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यमित्यभ्युपयन्ति, तथाहि—गामभ्याज शुक्लां देवदत्त ? दण्डेन, स्वर्गकामो यजेत, इत्यादिवाक्ये एते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्त आकाङ्क्षादिमत्पदोपस्थापितत्वात् गामानयेतिपदार्थवत् । दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति, एवं गवयशब्दो गवयवाचकः असति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात् । असति वृत्त्यन्तरे यः शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोरिति ॥ तन्मतं दूषयति—तन्न सम्यगिति । व्याप्तिज्ञानं विनापि शब्दादितो बोधस्य शब्दात्प्रत्येमीत्याद्याकारकस्य आनुभविकत्वात् । न हि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने मानमस्ति, अनुमितिरूपकार्यान्यथानुपपत्त्या तत्कल्प्यत इति चेत्सर्वत्रानुमितिस्थलेऽपि पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियत इति ॥ १४० ॥ १४१ ॥

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥

त्रैविध्यमिति ॥ केवलान्वयिभेदतः । केवलान्वयि, केवलव्यतिरेक्यन्वयव्यतिरेकि—रूपहेतुत्रैविध्याद[1]नुमानस्य त्रैविध्यमनुमानं त्रिविधं

---

1 तथाच मूले केवलान्वयीत्युपलक्षणमितरयोरपीति बोध्यम् ॥

भवतीत्यर्थः॥ तत्र[1] असद्विपक्षः केवलान्वयी, तथा इदं वाच्यं ज्ञेयत्वादित्यादौ, तत्र हि सर्वस्यैव वाच्यत्वाद्विपक्षासत्त्वम् । असत्सपक्षः केवलव्यतिरेकी, यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ, तत्रहि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभाव इति। सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा पर्वतो वह्निमान्धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्वादिति ॥ व्याप्तेर्भेदमाह—द्वैविध्यं त्विति । अन्वयव्यतिरेकाभ्यामित्यन्वयव्यतिरेकतः अन्वयेन व्यतिरेकेण चेत्यर्थः । अन्वयव्याप्तिः व्यतिरेकव्याप्तिरिति फलितोऽर्थः ॥ १४२ ॥

**अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ।**
**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥**

पूर्वं ६८।६९ कारिकाभ्यामन्वयव्याप्तेरुक्तत्वादिहानुपदोक्तव्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणमिति सा निर्वक्तव्येत्याह **अन्वयेत्यादि** । अन्वयात्तत्सत्त्वे तत्सत्त्वरूपाद्व्याप्तिः साहचर्यनियमोऽन्वयव्याप्तिः सा उक्ता ६८।६९ कारिकाभ्यामेव, इह ( गुणनिरूपणे ) व्यतिरेकात्तदभावे तदभावरूपाद्व्याप्तिरुच्यत इत्यर्थः॥ तत्स्वरूपमाह—**साध्येति** । यत् साध्याभावव्यापकत्वं हेत्वभावस्य भवेत्सा व्याप्तिरित्यर्थः । साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति तदर्थः ॥ १४३ ॥

**अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते ।**
**व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥**

---

१ तेषु मध्ये ॥

२ केवलान्वयिसाध्यकत्वं केवलान्वयित्वम् । निरवच्छिन्नवृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्, तच्च गगनाभावादौ साध्ये प्रसिद्धम् । यथाश्रुते च सिद्ध्यसिद्धिभ्यां व्याघात इति ॥

३ सिद्ध्यसिद्धिभ्यां व्याघातादत्रापि अगृहीतहेतुसहचारं यद्व्यतिरेकिसाध्यं तत्कलमर्थो वोध्यः ॥

४ अधिकरणाप्रसिद्धेति भावः ॥

५ गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः ॥

६ हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः ॥

७ तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः ॥

इदानीं प्रमाणमुपसंहरन्मीमांसकाभिमतमर्थापत्तेः प्रमाणान्तरत्वं निराकुरुते—अर्थापत्तेस्त्विति ॥ अयं हि तेषामभिप्रायः । पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा रात्रिभोजनं विना पीनत्वस्यानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यते, एवं जीवँश्चैत्रो गृहे नास्तीत्यत्रापि जीवतो गृहासत्त्वं वहिःसत्त्वमन्तराऽनुपपद्यमानमर्थापत्त्या तत्कल्पकमिति, एवं याऽर्थापत्तेः प्रमाणान्तरता प्राप्ता सा इह नैयायिकमते नेष्यते नेष्टा । यतो हि सा व्यतिरेकव्याप्तिबुध्या चरितार्था कृतप्रयोजना, अयमर्थः । उक्तस्थले देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वाभावस्तत्र तत्र रात्रिभोजित्वाभावः यथाऽमुत्र मुनौ, इति व्यतिरेकव्याप्त्यैव रात्रिभोजनस्य सिद्धत्वमिति, एवमन्यत्राप्यूह्यम् ॥ एवमनुपलब्ध्यादीनामपि न प्रमाणान्तरत्वमिति प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानीति सिद्धम् ॥ १४४ ॥

---

१ दृष्टे प्रत्यक्षतो ज्ञाते, श्रुते शब्दादवगते, एतेन दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेत्यर्थापत्तेर्द्वैविध्यं सूचितम् । अत्रेदमवधेयम् । यद् विना यदनुपपन्नं तत्तदुपपादकं भवतीति रात्रिभोजनमुपपादकम् पीनत्वमुपपाद्यम् । उपपादकज्ञानं फलमुपपाद्यज्ञानं करणम् फलकरणयोरर्थापत्तिशब्दो वर्त्तते, फले अर्थस्य आपत्तिः कल्पनेति व्युत्पत्त्या, करणे तु अर्थस्यापत्तिः कल्पना यस्मात् इति व्युत्पत्त्येति ॥

२ दिवामात्रभोजिनि पीने व्यभिचारवारणाय सत्यन्तम् । अहोरात्रभोजिन्यपीने व्यभिचारवारणाय विशेष्यम् । तच्च योगाद्यजन्यपीनत्वपरम् । तेन भोजनशून्ये योगिनि पीने न व्यभिचारः ॥

३ यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वं तत्र तत्र रात्रिभोजित्वमित्यन्वयव्याप्तेर्योगिनि व्यभिचारात् ॥

४ "यद्यत्र घटोऽभविष्यत्तदा भूतलमिवाद्रक्ष्यद्दर्शनाभावान्नास्तीति" *तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धेः सहकृतेनेन्द्रियेणैवाभावज्ञानोपपत्तेः । एवं चेष्टाया अपि, सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात् । यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेव, शते पञ्चाशदिति पौराणिकाभिमतसंभवस्यापि अनुमान एवान्तर्भावाच्छतवानित्युक्ते पञ्चाशद्वानिति बोधस्य कृतत्वेन शतस्य पञ्चाशद्व्याप्यत्वात् । एवमिह "वटे यक्षस्तिष्ठती" त्यैतिह्यस्यापि पौराणिकाभिमतस्य विशिष्याज्ञातप्रथमवक्तृके शब्द एवान्तर्भावात् । तत्र यदि तादृशशब्दस्य यथार्थत्वं तदा शब्दप्रमाणेऽन्तर्भावः । अन्यथा त्वप्रमाणमेवेति ॥

---

* तर्कितमारोपितं यत्प्रतियोगिसत्त्वं तद्विरोधिनी या अनुपलब्धिस्तत्सहकृतेनेत्यर्थः ॥

**सुखं तु जगतामेव काम्यं धर्मेण जन्यते ।**
**अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥**

क्रमप्राप्तं सुखं निरूपयति,—**सुखं त्विति, काम्यम्** अभिलाषविषयः ।—**धर्म्मेणेति** । धर्म्मत्वेन[1] सुखत्वेन कार्यकारणभाव इत्यर्थः । सुखत्वं[2]च सुख्यहमित्यनुव्यवसायसिद्धो जातिविशेषः । इतरेच्छा[3]नधीनेच्छाविषयत्वं वा ॥ दुःखं निरूपयति—**अधर्म्मेति** । अधर्म्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । यत् सचेतसां[4] प्राणिनां प्रतिकूलमनभिलषितम् तत् ॥ दुःखत्वं दुःख्यहमिति प्रत्यक्षसिद्धो जातिविशेषः । इतरद्वेषानधीने[5]द्वेषविषयत्वं वा ॥ १४५ ॥

**निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।**
**इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥**

इच्छां निरूपयति—**निर्दुःखत्व इति** । इच्छा हि कामोऽभिलाष इति यावत् । लक्षणन्तु इच्छात्वजातिमत्त्वम् । सा द्विविधा फलविषयिणी उपायविषयिणी च तत्र निर्दुःखत्वे दुःखाभावरूपे सुखे सुखरूपे च फले ( विषयत्वं सप्तम्यर्थः ) या इच्छा सा तज्ज्ञानात्फलत्वप्रकारकज्ञानादेव जायते, फलेच्छां प्रति फलज्ञानं कारणमित्यर्थः । इच्छां प्रति विषयज्ञानस्य कारणत्वादिति भावः ॥ **तदुपाये** फलोपाये ( विषयत्वं सप्तम्यर्थः ) या इच्छा सा तु यदि—**इष्टोपायत्वधी**रिष्टसाधनताज्ञानं तदा स्यात् । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणमित्यर्थः ॥ १४६ ॥

**चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।**
**तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥**

---

१ इदंच प्राचां मतेनोक्तं नवीनमते 'नित्यं विज्ञानमानन्दं ब्रह्मेति' श्रुत्या भगवति नित्यसुखसिद्धौ धर्म्मस्य कार्यतावच्छेदकं जन्यसुखत्वमेवेति बोध्यम् ॥

२ यद्यपि मूलोक्तरीत्या जगत्कामनाविषयत्वे सति धर्म्मजन्यत्वं तत्त्वं लब्धं तथापि तत्स्वरूपकमेव नित्यसुखे तदभावात् ॥

३ भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीने' तीच्छाविशेषणम् ॥

४ अत्रापि मूलोक्तदिशा सचेतसामनभिमतत्वे सत्यधर्म्मजन्यत्वं तत्त्वमिति लभ्यते परन्तदपि स्वरूपकथनमेव ॥

५ सर्पादावतिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् ॥

**चिकीर्षेति** । या तु कृतिसाध्यत्वप्रकारा ( इदं मत्कृतिसाध्यं भवत्वित्याकारा ) कृतिसाध्यविषयिणी इच्छा भवेत् सा चिकीर्षा, तस्या हेतुस्तद्धेतुः कृतिसाध्यं चेष्टसाधनञ्च तयोर्भावस्तत्त्वन्तस्य मतिः प्रकारित्वं षष्ठ्यर्थस्तत्प्रकारकं[1] ज्ञानं भवेदित्यर्थः ॥ अत एव सुमेरुशृङ्गाहरणे प्रासादादधःपतने च न चिकीर्षा ॥ १४७ ॥

**बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।**
**तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥**

ननु तर्हि अगम्यागमनादौ चिकीर्षा कुतो न जायते तत्राह—**बलवदिति** । बलवद्द्विष्ट[2]हेतुत्वप्रकारकं ज्ञानं तत्र ( चिकीर्षायां ) प्रतिबन्धकं स्यादित्यर्थः । अगम्यागमनादौ च नरकादिरूपं दुःखं कामोपभोगजनितात्सुखाद्बलवद्द्विष्टमिति तद्धेतुत्वज्ञानान्न सतां चिकीर्षाऽसतान्तु तदज्ञानाद्भवत्येव सा ॥ मतान्तररीत्याह—**तददिति** । बलवदनिष्टाजनकत्वज्ञानस्य चिकीर्षां प्रति हेतुत्वं, कस्यचिन्मत इत्यनेनास्वरसः सूचितः । तद्बीजन्तु कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनाऽपि चिकीर्षायां विलम्बाभावः ॥ १४८ ॥

**द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ।**
**प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥**
**एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।**
**चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥**
**उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।**
**निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनता धियः ॥ १५१ ॥**

द्वेषं निरूपयति—**द्विष्टसाधनतेति** । द्विष्टसाधनताज्ञानं द्वेषस्य

---

१ कृतिसाध्यत्वप्रकारकमिदम्मत्कृतिसाध्यमित्याकारकमेवमिष्टसाधनत्वप्रकारकमिदं मदिष्टसाधनमित्याकारकञ्च ज्ञानं चिकीर्षायाङ्कारणमित्यर्थः ॥

२ द्विष्टं द्वेषविषयीभूतम् । द्वेषश्च दुःखे ताद्रूप्येण ज्ञानात् । सर्पादौ तद्धेतुत्वज्ञानात् द्वेषे बलवत्त्वन्तु जातिविशेष एव ॥

**सुखं तु जगतामेव काम्यं धर्मेण जन्यते ।**
**अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥**

क्रमप्राप्तं सुखं निरूपयति,—**सुखं त्विति, काम्यम्** अभिलाषविषयः ।—**धर्म्मेणेति** । धर्म्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः । सुखत्वञ्च सुख्यहमित्यनुव्यवसायसिद्धो जातिविशेषः । इतरेच्छानधीनेच्छाविषयत्वं वा ॥ दुःखं निरूपयति—**अधर्म्मेति** । अधर्म्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । यत् **सचेतसां** प्राणिनां **प्रतिकूल**मनभिलषितम् तत् ॥ दुःखत्वं दुःख्यहमिति प्रत्यक्षसिद्धो जातिविशेषः । इतरद्वेषानधीनद्वेषविषयत्वं वा ॥ १४५ ॥

**निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।**
**इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥**

इच्छां निरूपयति—**निर्दुःखत्व इति** । इच्छा हि कामोऽभिलाष इति यावत् । लक्षणन्तु इच्छात्वजातिमत्त्वम् । सा द्विविधा फलविषयिणी उपायविषयिणी च तत्र निर्दुःखत्वे दुःखाभावरूपे सुखे सुखरूपे च फले ( विषयत्वं सप्तम्यर्थः ) या इच्छा सा तज्ज्ञानात्फलत्वप्रकारकज्ञानादेव जायते, फलेच्छां प्रति फलज्ञानं कारणमित्यर्थः । इच्छां प्रति विषयज्ञानस्य कारणत्वादिति भावः ॥ **तदुपाये** फलोपाये ( विषयत्वं सप्तम्यर्थः ) या इच्छा सा तु यदि—**इष्टोपायत्वधी**रिष्टसाधनताज्ञानं तदा स्यात् । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणमित्यर्थः ॥ १४६ ॥

**चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।**
**तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥**

---

१ इदंच प्राचां मतेनोक्तं नवीनमते 'नित्यं विज्ञानमानन्दं ब्रह्मेति' श्रुत्या भगवति नित्यसुखसिद्धौ धर्म्मस्य कार्यतावच्छेदकं जन्यसुखत्वमेवेति बोध्यम् ॥

२ यद्यपि मूलोक्तरीत्या जगत्कामनाविषयत्वे सति धर्म्मजन्यत्वं तत्त्वं लब्धं तथापि तत्स्वरूपकमेव नित्यसुखे तदभावात् ॥

३ भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीने' तीच्छाविशेषणम् ॥

४ अत्रापि मूलोक्तदिशा सचेतसामनभिमतत्वे सत्यधर्म्मजन्यत्वं तत्त्वमिति लभ्यते परन्तदपि स्वरूपकथनमेव ॥

५ सर्पादावतिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् ॥

**चिकीर्षेति** । या तु कृतिसाध्यत्वप्रकारा ( इदं मत्कृतिसाध्यं भवत्वित्याकारा ) कृतिसाध्यविषयिणी इच्छा भवेत् सा चिकीर्षा, तस्या हेतुस्तद्धेतुः कृतिसाध्यं चेष्टसाधनञ्च तयोर्भावस्तत्त्वन्तस्य मतिः प्रकारित्वं षष्ठ्यर्थस्तत्प्रकारकं[1] ज्ञानं भवेदित्यर्थः ॥ अत एव सुमेरुशृङ्गाहरणे प्रासादादधःपतने च न चिकीर्षा ॥ १४७ ॥

**बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।**
**तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥**

ननु तर्हि अगम्यागमनादौ चिकीर्षा कुतो न जायते तत्राह—**बलवदिति** । बलवद्द्विष्टहेतुत्वप्रकारकं[2] ज्ञानं तत्र ( चिकीर्षायां ) प्रतिबन्धकं स्यादित्यर्थः । अगम्यागमनादौ च नरकादिरूपं दुःखं कामोपभोगजनितात्सुखाद्बलवद्द्विष्टमिति तद्धेतुत्वज्ञानान्न सतां चिकीर्षाऽसतान्तु तदज्ञानाद्भवत्येव सा ॥ मतान्तररीत्याह—**तदिति** । बलवदनिष्टाजनकत्वज्ञानस्य चिकीर्षां प्रति हेतुत्वं, कस्यचिन्मत इत्यनेनास्वरसः सूचितः । तद्बीजन्तु कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनाऽपि चिकीर्षायां विलम्बाभावः ॥ १४८ ॥

**द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ।**
**प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥**
**एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।**
**चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥**
**उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।**
**निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनता धियः ॥ १५१ ॥**

द्वेषं निरूपयति—**द्विष्टसाधनतेति** । द्विष्टसाधनताज्ञानं द्वेषस्य

---

१ कृतिसाध्यत्वप्रकारकमिदम्मत्कृतिसाध्यमित्याकारकमेवमिष्टसाधनत्वप्रकारकमिदंमदिष्टसाधनमित्याकारकञ्च ज्ञानं चिकीर्षायाङ्कारणमित्यर्थः ॥

२ द्विष्टं द्वेषविषयीभूतम् । द्वेषश्च दुःखे तादृूप्येण ज्ञानात् । सर्पादौ तद्धेतुत्वज्ञानात् द्वेषे बलवत्त्वन्तु जातिविशेष एव ॥

दुःखोपायविषयकद्वेषस्य[1] कारणं भवेदित्यर्थः । लक्षणन्तु "द्वेष्टि" इत्यनुभवसिद्धद्वेषत्वजातिमत्त्वं द्विष्टसाधनताज्ञानजन्यगुणत्वं वा, बलवदिष्टसाधनताज्ञानञ्चास्य प्रतिबन्धकम्, तेन नान्तरीयक[2]दुःखजनके पाकादौ न द्वेषः ॥

यत्नं निरूपयति—**प्रवृत्तिश्चेति** । प्रवृत्ति[3]-निवृत्ति[4]-जीवनयोनि[5]भेदात् प्रयत्नस्त्रिविध इत्येवं प्रयत्नस्य त्रैविध्यं त्रिविधत्वं तान्त्रिकैर्ज्ञातसिद्धान्तैः (न्यायसिद्धान्तज्ञानवद्भिः)—**परिकीर्त्तितमुक्तम्** ॥

प्रवृत्तिकारणान्याह—**चिकीर्षेति** । चिकीर्षा, कृतिसाध्यताज्ञानम् । इष्टसाधनताज्ञानमुपादानस्य समवायिकारणस्य अध्यक्षं प्रत्यक्षञ्चेति चत्वारि प्रवृत्तौ जनकं[6] भवेदित्यर्थः । निवृत्तिकारणमाह—**निवृत्तिस्त्वति** । द्विष्टसाधनताज्ञानात्फलगताद्द्वेषा[7]च्च निवृत्तिर्भवेदित्यर्थः ॥१४९–१५१॥

**यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।**
**शरीरे प्राणसंचारे कारणं परिकीर्त्तितम् ॥ १५२ ॥**

**यत्न इति** । जीवनयोनिनामको यत्नस्तु सर्वदा यावज्जीवमनुवर्त्तते सचातीन्द्रिय इन्द्रियागोचरः । तत्सत्त्वे प्रमाणमाह—**शरीर इति** ॥ प्राणसञ्चारो ह्यधिकश्वासादिः प्रयत्नसाध्यः । इत्थञ्च प्राणसञ्चा-

---

१ द्वेषोऽपि द्विविधः फलोपायरूपविषयभेदात् । फलं सुखाभावो दुःखञ्च, तत्र तु द्विष्टत्वप्रकारकमेव ज्ञानं कारणमिति बोध्यम् ॥

२ अन्तराशब्दो विनार्थस्तस्य नञ्शब्देन समासे भवार्थे "वृद्धाच्छः" (पा. ४।२।११४) इति छस्येयादेशे ततः स्वार्थे कप्रत्यये नान्तरीयकशब्दस्याऽविनाभावोऽर्थः ॥

३ प्रवृत्तित्वञ्च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः ॥

४ निवृत्तित्वञ्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः ॥

५ जीवनयोनित्वञ्च साहजिकप्राणसञ्चारविषयकयत्नत्वम् ॥

६ कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकात्प्रवृत्तौ कारणमित्यपि केषाञ्चिन्मतम् ॥

७ तत्राद्यस्य दुःखसाधनविषयकनिवृत्तिं प्रति, द्वितीयस्य तु फलविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकादवधारितमिति बोध्यम् ॥

८ दृष्टान्तसिद्धौ च ॥

रस्य सर्वस्य यत्नसाध्यत्वानुमानात्प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनिनामकः प्रयत्नः ॥ १५२ ॥

**अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत्।**
**अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥**

गुरुत्वं निरूपयति—**अतीन्द्रियमिति**। इन्द्रियाण्यतिक्रम्य वर्त्तत इत्यतीन्द्रियम् इन्द्रियागोचरः। अस्याधिकरणमाह—**पृथिव्यादीति**। **तत्** गुरुत्वम्। **अनित्ये** द्व्यणुकादौ—**तत्** गुरुत्वम**नित्यम्**—**नित्ये** परमाणौ **नित्यं** गुरुत्वमित्यनुवर्त्तते ॥ १५३ ॥

**तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि।**
**सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥**

**तदेवेति**। तद्गुरुत्वमेव—**पतनाख्ये** आद्यपतननामके कर्म्मणि—**असमवायि** असमवायिकारणं **स्यादि**त्यर्थः। इत्थञ्चाद्यपतनासमवायिकारणत्वमेतस्य लक्षणं पर्यवसन्नम् ॥

द्रवत्वं निरूपयति—**सांसिद्धिकमिति**। द्रवत्वं द्विविधं सांसिद्धिकं स्वाभाविकम् नैमित्तिकन्निमित्तकृतञ्चेत्यर्थः ॥ १५४ ॥

**सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः।**
**परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥**

अस्याधिकरणमाह—**सांसिद्धिकं त्विति**। **परमाणाविति**। जलपरमाणौ द्रवत्वं **नित्यमन्यत्र** पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वम**नित्यं** तथाच कुत्रचित्तेजसि कुत्रचित्पृथिव्याञ्च नैमित्तिकन्द्रवत्वमिति बोध्यम् ॥ १५५ ॥

**नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु।**
**द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥**

---

१ एकत्र यत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वस्यानुमानादिति भावः ॥

२ प्राणसञ्चारहेतुत्वेनानुमीयमान एव ॥

३ द्वितीयपतनक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाह—आद्येति। आद्यत्वञ्चेह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम्‌ द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इति हृदयम्। एवमुत्तरत्राप्यूह्यम् ॥

तत्र को वा नैमित्तिकार्थस्तद्दर्शयति—**नैमित्तिकमिति** । वह्नीति पदं तेजोऽर्थकम् । जन्यत्वं पञ्चम्यर्थः । तथाच तेजःसंयोगजन्यं नैमित्तिकं द्रवत्वम् तच्च तपनीयं सुवर्णं तदादिरूपे तेजसि, घृतजतु-(लाक्षा) प्रभृतिपृथिव्याञ्च, वर्त्तत इत्यर्थः ॥ **तत्** द्रवत्वम्—**स्यन्दने** आद्यस्यन्दने—**हेतुः** असमवायिकारणम्, ॥ **संग्रहे** सक्तुकादिसंयोगविशेषे—**निमित्तम्** निमित्तकारणमित्यर्थः ॥ तथाच आद्यस्यन्दनासमवायिकारणत्वं द्रवत्वस्य लक्षणम्पर्यवसन्नम् ॥ १५६ ॥

**स्नेहो जले स नित्योऽणावनित्योवयविन्यसौ ।**
**तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥**

स्नेहं निरूपयति—**स्नेहो जल इति** । जल एवेत्यर्थः ।—**स स्नेहः अणौ** परमाणौ नित्यः । **अवयविनि** । द्व्यणुकादौ । **असौ** स्नेहः **अनित्यः** । ननु पृथिव्यामपि तैलादौ स्नेह उपलभ्यते नैचासौ जलीयस्तर्थासति दहनप्रातिकूल्यप्रसङ्गादत आह—**तैलान्तरेति** । तैलस्यान्तर्मध्ये एतस्य स्नेहस्य प्रकर्षादाधिक्याद्दहनस्याग्नेरनुकूलता आनुकूल्यमित्यर्थः । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति स्थितिः ॥ १५७ ॥

**संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।**
**मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥**

संस्कारं निरूपयति—**संस्कारेति** । वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः । तत्र वेगस्तु मूर्त्तमात्रे पृथिव्यप्तेजोवायुमनोरूपे मूर्त एव स्यात् । अयञ्च द्विविधः कर्म्मजः कचिद्वेगजश्च । शरीरादौ

---

१ अत्रेदम्बोध्यं संग्रहनिमित्तत्वं स्नेहसहितस्यैव, तेन सुवर्णादीनां न तत्त्वमिति ॥

२ तैले प्रतीयमानः स्नेहः ॥

३ तैलान्तर्गतजलभागनिष्ठः ॥

४ तैलान्तर्जलभागस्वीकारे ॥

५ दहननाशप्रसङ्गात् ॥

६ अतस्तैल उपलभ्यमानोऽपि स्नेहो जलीय एवेति बोध्यम् ॥

७ मर्यादा ॥ तथाचामरः "मर्यादा धारणा स्थितिरि"–ति ॥

८ संस्कारेषु मध्ये, संस्कारत्वजातिमत्त्वं संस्कारस्य लक्षणमेवं वेगत्वजातिमत्त्वं वेगस्य ॥

हि नोदनजनितेन कर्म्मणा वेगो जन्यते स कर्मजः । यत्र च वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

**स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।**
**अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥**

**स्थितिस्थापकेति** । अन्यथाकृतस्य पुनस्तदवस्थापादकः । अयं—**क्षितौ** कटादि[1]पृथिवीवृत्तिः । **केचिदिति** । **चतुर्षु** क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः ॥ **असौ** स्थितिस्थापकः—**अतीन्द्रियः** । आकृष्टशाखादीनां पुनर्यथास्थानं गमनादनुमेयो न तु प्रत्यक्ष इत्यर्थः । **क्वचित्** आकृष्टशाखादौ ॥ १५९ ॥

**भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।**
**उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥**

**भावनाख्य इति** । अनुभव[2]जन्या स्मृतिहेतुर्भावना सा आख्या यस्य सः । अयन्तु—**जीववृत्तिः**रात्ममात्रवृत्तिरित्यर्थः । **अतीन्द्रियः** स्मरणादिरूपकार्यानुमेयः । **तस्य** संस्कारस्य **उपेक्षानात्मकः**[3] उपेक्षान्यः **निश्चयः**[4] निश्चयात्मकं ज्ञानं कारणमित्यर्थः ॥ १६० ॥

**स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**
**धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥**

त[5]त्र प्रमाणं दर्शयति **स्मरण इति** । **असौ** संस्कारः । यतः स्मरणं प्रत्यभिज्ञानं ( स एवायं देवदत्त इत्याकारकमैन्द्रियकं ज्ञानं ) च जनयत्यतः संस्कारोऽस्तीति कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे कारणत्वासम्[6]भवादिति भावः॥

---

१ आदिनाऽऽकृष्टशाखादिः ॥

२ आत्मादावतिव्याप्तिवारणाय अनुभवजन्येति, अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतिहेतुरिति ॥

३ उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षात्मक इत्युक्तम् ॥

४ तत्संशयात्संस्कारानुत्पत्तेर्निश्चय इत्युक्तम् ॥

५ संस्कारे ॥

६ कार्याव्यवहितप्राक्क्षणवृत्ति-स्वस्वव्यापारान्यतरत्वस्यैव कारणतापदार्थत्वादिति भावः ॥

अदृष्टं निरूपयति—**धर्माधर्माविति** । इमौ च संज्ञिनावदृष्टमिति संज्ञा । धर्मस्य लक्षणमाह—**धर्म इति** । स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः ॥ १६१ ॥

**गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।**
**कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥**

तत्र प्रमाणं दर्शयितुमाह—**गङ्गेति** । गङ्गास्नानादिव्यापारतया हि धर्म्मः कल्प्यते अन्यथा तेषां क्रियारूपाणाञ्चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गादिजनकत्वं न स्यात्। तदुक्तमाचार्यैः 'चिरध्वस्तं फलायालं न कर्म्मातिशयं विना' इति। अत्र यागादीत्यादिना होमदाने, तेषां ध्वंसस्यापि स्वर्गादिफलजनकत्वं सम्भवतीति गङ्गास्नानादीत्युक्तम्। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः ॥ अपूर्वस्य व्यापारत्वे प्रमाणान्तरमाह—**कर्मनाशेति** । कर्मनाशानाम्नी काचिन्नदी । आदिना 'कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्। गण्डकीबाहुतरणाद्धर्म्मः क्षरति कीर्तनात्' इति स्मृत्युक्तमन्यदप्यनुसन्धेयम् । असौ धर्मः । अयमर्थः । यद्यपूर्वं न स्यात्तदा कर्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात् । न हि तेन यागादीनां नाशः प्रतिबन्धो वा कर्त्तुं शक्यते तस्य पूर्वमेवोत्पन्नत्वाद्विनष्टत्वाच्चेति ॥ १६२ ॥

---

१ मूले स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्य, आदिपदेन च शरीरेन्द्रियादेः परिग्रहः ॥

२ धर्म्मे ॥

३ चिरध्वस्तं कर्म्म अतिशयमपूर्वरूपव्यापारं विना फलाय फलं साधयितुमलं समर्थं नेत्यर्थः ॥

४ यागादिरूपस्य, ते ( पूर्वपक्षिणो ) हि यागादिरेव धर्म्मस्तस्यैव विधिप्रतिपाद्यत्वात् " चोदनालक्षणोऽर्थो धर्म्मः " इति हि तल्लक्षणम् तस्यासमवायिकारणत्वेन फलाव्यवहितपूर्वकालवृत्तित्वाभावेऽपि न व्यापारापेक्षा, समवायिकारण एव हि कार्याव्यवहितपूर्ववर्त्तित्वनियमोऽन्यत्र तु कार्यनियतपूर्ववृत्तित्वमात्रमित्थञ्च ध्वंसस्यापि व्यापारत्वमनावश्यकमेवेति वदन्ति, तदेतेन प्रत्युक्तम्भवति ॥

५ कर्मनाशाजलस्पर्शादिना ॥

६ यागादेः ॥

**अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।**
**प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥१६३॥**

अधर्मस्य लक्षणमाह—**अधर्म इति** । नरकदुःखादिसकलदुः-खानां नारकिशरीरादीनाञ्च साधनमधर्म्म इत्यर्थः । तत्र प्रमाणं दर्शयितुमाह—**प्रायश्चित्तेति** । यदि ह्यधर्मोऽपूर्वं न स्यात्तदा प्रायश्चित्तादि-नाश्यत्वन्तस्य स्मृत्याद्युक्तमनुपपन्नं स्यात् । न हि तेन ब्रह्महत्यादीनां पराभिमताधर्मरूपाणां नाशः प्रतिबन्धो वा विधातुं शक्यते तेषाम्पूर्वमेव विनष्टत्वादिति ॥ अनयोराश्रयमाह—**जीवेति** । **इमौ गुणौ** धर्माधर्मौ । ईश्वरस्य धर्म्माधर्म्माभावादिति भावः ॥ १६३ ॥

**इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।**
**शब्दो ध्वनिश्च वर्णश्च, मृदङ्गादिभवो ध्वनिः ॥१६४॥**

ननु गङ्गादिदर्शनादिनेश्वरे कुतो न धर्म्माद्युत्पत्तिरत आह—**इमौ-त्विति** । धर्म्माधर्म्मावित्यर्थः । **वासनेति** । तथाच ईश्वरे मिथ्याज्ञान-जन्यवासनाविरहान्न धर्म्मादेरुत्पत्तिरिति भावः ॥ **ज्ञानादपीति** । अत-स्तत्त्वज्ञानिना कृते सुकृतदुष्कृतकर्म्मणी न फलायालमिति भावः । अपिना भोगपरिग्रहः ॥ शब्दं निरूपयति—**शब्द इति** । शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च, तत्र मृदङ्गादिवाद्यजनितः शब्दो-ध्वनिरित्युच्यते ॥ १६४ ॥

**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।**
**सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥**

---

१ मूले नरकादीत्यत्र नरकपदेन दुःखमात्रस्य आदिपदेन च शरीरेन्द्रियादेः परिग्रहः ॥

२ प्रायश्चित्तादिना, 'प्रायःपापमिति प्रोक्तञ्चित्तं तस्य विशोधनमि'ति स्मृतिलक्षि-तस्यास्य पापनाशकं कर्म्मार्थः ॥

३ तथाचश्रुतिः 'क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टेपरावरे' इति । 'ज्ञानाग्निः सर्वक-र्म्माणिभस्मसात्कुरुतेऽर्जुन' इत्यादिस्मृतिश्च, 'नाभुक्तं क्षीयते कर्म्मे'ति तु प्रारब्धक-र्म्माभिप्रायम् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धम् ॥

**कण्ठेति** । प्रयत्नवता[1] नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा प्रतिनिवृत्तः प्रयत्नविशेषेण कण्ठादिस्थानान्याहत्य वर्णाञ्जनयतीति स्थिति रित्थं च वायोः कण्ठसंयोगादिना[2] समुत्पन्ना ये ककारादयस्ते वर्णा मता इत्यर्थः । अस्याश्रयमाह—**नभोवृत्तिरिति** । आकाशसमवेतइत्यर्थः । ननु तर्हि दूरदेशस्थः शब्दः कुतो न गृह्यते आकाशस्यैक्यादत आह—**श्रोत्रेति** ।[3] आकाशस्यैक्येऽपि कर्णविवररूपावच्छेदकभेदभिन्नतत्तच्छ्रोत्राऽवच्छेदेनोत्पन्न एव शब्दस्तेन तेन पुंसा गृह्यते न तु सर्वोऽपीति भावः ॥ १६५ ॥

**वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।**
**कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥**

ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह—**वीचीति** । अयमर्थः आद्यशब्देन बहिर्देशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥ **कदम्बेति** । आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन्कल्पे गौरवादुक्तं[4] कस्यचिन्मत इति ॥ १६६ ॥

**उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।**
**सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥**

ननु[5] शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह—**उत्पन्न इति** । शब्दा-

---

१ आत्मा बुद्ध्या समेत्यार्थान्मनोयुङ्क्ते विवक्षया, मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ०० 'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते' इति शिक्षोक्तदिशा वर्णोत्पत्तिस्थितिरत्रोक्ता, अस्यार्थः आत्माऽन्तःकरणम् बुद्ध्या स्ववृत्त्या समेत्यैकबुद्धिविषयान्कृत्वाऽर्थान् वक्तुमिच्छया मनः युङ्क्ते युक्तंकरोति तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति सोऽग्निः मारुतं प्रेरयति स वायुरुदीर्ण उर्ध्वं प्रेरितः मूर्ध्नि मस्तकेऽभिहतः सन् वक्त्रं मुखमापद्यासाद्य वर्णान्कादीञ्जनयत इति ॥

२ आदिनेकारादिजनकताल्वसंयोगादिः ॥

३ तथाच श्रोत्रग्राह्यत्वे सति गुणत्वं शब्दस्य लक्षणं पर्यवसन्नम्भवति, रूपादावतिव्याप्तिवारणाय श्रोत्रेति, शब्दत्वे शब्दाभावे चातिव्याप्तिवारणाय गुणत्वमिति ॥

४ दशशब्दानां तत्प्रागभावानां तद्धेतुहेतुमद्भावानाञ्च कल्पने गौरवादित्यर्थः ॥

५ मीमांसकमतेन शङ्कते ॥

नामुत्पादविनाश[1]प्रत्ययविषयत्वादनित्यत्वमित्यर्थः ॥ ननु स एवायं गकार इत्यादि–प्रत्यभिज्ञानाच्छब्दानां नित्यत्वमित्थंचोत्पादविनाशबु-द्धिर्भ्रमरूपैवेत्यत आह—**सोऽयं क इतीति** ॥ तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषय उक्त[2]प्रतीतिविरोधात् । इत्थं[3] च द्वयो[4]रपि बुध्योर्न भ्रमत्व[5]मिति ॥ १६७ ॥

**तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।**
**तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥**

ननु सजातीयत्वं सोऽयमितिप्रत्यभिज्ञायां भासत इति कुत्र दृष्टमि-त्यत आह—**तदेवेति** । यदौषधम्मया कृतन्तदेवान्येन कृतमित्यादि-दर्शनादिति भावः ॥

उपसंहरति—**त[6]स्मादिति** । सर्वे वर्णा अनित्या एवेति नोऽस्माकं तार्कि[7]काणाम् ॥ १६८ ॥

॥ इत्यन्वितार्थदीपिकायां भाषापरिच्छेदव्याख्यायां दशमः परिच्छेदः ॥

---

१ प्रत्ययो ज्ञानम् ॥

२ उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः ॥

३ प्रत्यभिज्ञानस्य सजातीयविषयत्वे च ॥

४ उत्पादप्रतीति–प्रत्यभिज्ञानयोरित्यर्थः ॥

५ अत्रेदम्बोध्यम् । शब्दस्त्रिविधः । संयोगजो–विभागज–शब्दजश्चेति, तत्राद्यो भेरीदण्डादिसंयोगजन्यः द्वितीयः वंशादौ पाट्यमाने दलद्वयविभागजन्यश्चटचटा-शब्दः । भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दाः शब्दजाः । तत्र ध्वन्यात्मक-संयोगजन्याद्यशब्दं प्रति गगनं समवायिकारणं भेर्याकाशसंयोगोऽसमवायिकारणम् भेरीदण्डसंयोगादि निमित्तकारणम् ॥ विभागजन्यध्वन्यात्मकाद्यशब्दं प्रति वंशदला-काशविभागोऽसमवायिकारणम् वंशदलद्वयविभागो निमित्तकारणम् ॥ वर्णात्मकाद्य-शब्दं प्रति तु कण्ठताल्वादिनाऽऽकाशसंयोगोऽसमवायिकारणम् कण्ठताल्वादिना वाय्वादिसंयोगो निमित्तकारणम् । द्वितीयादिशब्दं प्रति तु पूर्वपूर्वशब्दोऽसमवायि-कारणम् पवनादिर्निमित्तकारणमिति विवेकः । सर्वोऽप्ययमनित्योऽव्याप्यवृत्तिश्च ॥ अन्त्यादन्त्यः स्वकार्यशब्दनाश्यः अन्त्यस्तूपान्त्यशब्देन तन्नाशेन वा नाश्य इति ॥

६ अयम्पाठः प्राचीनपुस्तकेषु नास्ति परंतेषु सुखन्तु जगतामेवेत्यारभ्य निर्दुः-खत्वे सुखे चेच्छा तज्ज्ञानादेव जायत इति सार्धपद्यमेकपद्यत्वेन धृतमस्तीति सम्यक्प्रतिभाति ॥

७ अयं हि तर्कग्रन्थः । न्यायसूत्रे कण्ठतः सप्तपदार्थानुक्तेः । वैशेषिकसूत्रे तदुक्ति-सत्त्वेऽपि तैः प्रमाणचतुष्टयानङ्गीकारात् ॥ अयञ्चोभयविलक्षण इति ॥

मिथिलादेशजनुषाऽन्तेवासिषु कृपाजुषा ॥
श्रीमन्मुकुन्दविदुषा समकालीयमादरात् ॥ १ ॥
भाषापरिच्छेदव्याख्या अन्वितार्थप्रदीपिका ॥
मुदेऽस्तु प्रथमादेव्या व्युत्पित्सूनाञ्च सन्ततम् ॥ २ ॥
अब्धिबाणाङ्कपृथिवी ( १९५४ ) सम्मिते वैक्रमेऽब्दके ॥
शुचौ शुचावहौ जीवे व्याख्येयं पूर्णतामयात् ॥ ३ ॥



# विक्रेयाणि संस्कृतनूतनमुद्रितपुस्तकानि ।

## संस्कृत–काव्यग्रन्थ.

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| **अमरुशतक**—श्रीअमरुककविविरचित, अर्जुनवर्मदेवशर्मप्रणीत रसिकसंजीवनी टीकेसहित. | ० | १० | ० | २ |
| **ऋतुसंहार काव्य**—कालिदासकृत, मणिरामकृत टीकेसहित आणि **शृङ्गारतिलक** काव्य. | ० | ६ | ० | २ |
| **कथाकौतुक**—पण्डितश्रीवरविरचित. | ० | १२ | ० | २ |
| **कथासरित्सागर**—महाकवि श्रीसोमदेवभट्टविरचित. ह्यांत निरनिराळ्या मनोरंजक १२४ कथा आहेत. | ५ | ४ | ० | १२ |
| **किरातार्जुनीय काव्य**—भारविकृत, मल्लिनाथकृत घण्टापथटीकेसहित. | २ | ० | ० | ६ |
| **कुमारसंभव काव्य**—कालिदासकृत, मल्लिनाथकृत (१–७ सर्ग) व सीतारामकृत (८–१७ सर्ग) संजीविनी टीकेसहित. | १ | ८ | ० | ८ |
| **गङ्गावतरण**—श्रीनीलकण्ठदीक्षितविरचित. | ० | ८ | ० | २ |
| **गाथासप्तशती**—श्रीसातवाहनविरचित, गङ्गाधरभट्टकृत टीकेसहित. | १ | ८ | ० | ६ |
| **गीतगोविन्द**—महाकवि श्रीजयदेवविरचित, कुंभनृपतिप्रणीत रसिकप्रिया व्याख्या व महामहोपाध्याय शंकरविरचित रसमञ्जरी व्याख्या यांसहित. | १ | २ | ० | ६ |
| **जयन्तविजय**—श्रीमदभयदेवविरचित. | १ | ० | ० | ३ |
| **दशावतारचरित काव्य**—श्रीक्षेमेन्द्रकृत. | १ | ० | ० | ३ |
| **देलरामाकथासार**—राजानकभट्टाह्लादकृत. | ० | ७ | ० | २ |
| **नीतिशतक**—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित. | ० | ६ | ० | २ |
| **नैषधीयचरित**—श्रीहर्षविरचित, नैषधीयप्रकाशाख्यनारायणीटीकेसहित. | ६ | ० | ० | १२ |
| **पतञ्जलिचरित**—श्रीरामभद्रदीक्षितप्रणीत. | ० | १० | ० | २ |
| **पुष्पबाणविलास**—(श्रीकालिदासकृत) पंडितवर श्रीवेंकटसार्वभौमविरचित व्याख्येसहित. | ० | ४ | ० | २ |
| **बालभारत**—श्रीमदमरचन्द्रसूरिविरचित. | ३ | ४ | ० | ८ |
| **बृहत्कथामञ्जरी**—श्रीक्षेमेन्द्रविरचित. | ३ | १२ | ० | ८ |
| **भट्टिकाव्य**—भट्टिकृत, जयमङ्गलकृत जयमङ्गला टीकेसहित. | ३ | ० | ० | ६ |
| **भारतमञ्जरी काव्य**—महाकविश्रीक्षेमेन्द्रकृत. | ५ | ० | ० | १० |

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| **मेघदूत काव्य**—कालिदासकृत, मल्लिनाथकृत संजीविनी टीकेसह. ... ... ... ... | ० | ८ | ० | २ |
| **रघुवंश काव्य**—कालिदासकृत, मल्लिनाथकृत संजीविनी टीकेसहित, स्थूलाक्षर. ... ... ... | २ | ४ | ० | ८ |
| **रघुवंश काव्य**—सूक्ष्माक्षर. ... ... ... | १ | ४ | ० | ४ |
| **रसिकाष्टक काव्य**—नारायणभट्ट पर्वणीकरकृत. ... | ० | १ | ० | १ |
| **राघवनैषधीय काव्य**-श्रीहरदत्तसूरिकृत, स्वकृत टीकेसहित. | | ८ | ० | २ |
| **रावणार्जुनीय काव्य**—काश्मीरिक श्रीभट्टभीमविरचित. | १ | ४ | ० | ३ |
| **रामायणमञ्जरी**—क्षेमेन्द्रविरचित. ... ... | ३ | ४ | ० | ८ |
| **राक्षसकाव्य**—राक्षसकविकृत. ... ... | ० | १ | ० | १ |
| **विष्णुभक्तिकल्पलता काव्य**—पुरुषोत्तमविरचित, महीधरविरचित टीकेसहित. ... ... ... | ० | १० | ० | ३ |
| **विदग्धमुखमण्डन काव्य**-धर्मदाससूरिविरचित(सटीक). | ० | ६ | ० | २ |
| **वैराग्यशतक**-भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसह. | ० | ६ | ० | १ |
| **शिशुपालवधकाव्य**—माघकृत, मल्लिनाथकृत सर्वंकषा टीकेसहित. ... ... ... ... | २ | ८ | ० | ८ |
| **शृङ्गारतिलक**—महाकवि कालिदासकृत. ... ... | ० | १ | ० | १ |
| **शृङ्गारशतक**-भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसह. | ० | ५ | ० | १ |
| **समयमातृका काव्य**—श्रीक्षेमेन्द्रविरचित. ... | ० | ८ | ० | २ |
| **सहृदयानन्द काव्य**-कृष्णानंदकृत. ह्याचे १५ सर्ग आहेत. | ० | १० | ० | २ |
| **साम्बपञ्चाशिका**-साम्बकविप्रणीत, क्षेमराजकृत टीकेसह. | ० | ४ | ० | १ |
| **सुभाषितत्रिशती**—(भर्तृहरिशतकत्रयम्) श्रीरामचन्द्र-बुधेन्द्रविरचित सहृदयानन्दिनी व्याख्येसह. ... | १ | ४ | ० | ४ |
| **सुरथोत्सव**—श्रीसोमेश्वरदेवविरचित. ... ... | ० | १४ | ० | ४ |
| **सूक्तिसंग्रह**—कविराक्षसकृत. ... ... ... | ० | १ | ० | १ |
| **सेतुबन्धमहाकाव्य**—श्रीप्रवरसेनविरचित, श्रीरामदास-भूपतिप्रणीत टीकेसहित. ... ... ... | ३ | ४ | ० | ८ |
| **हरचरितचिन्तामणि काव्य**—राजानक-जयरथकृत. | १ | १२ | ० | ४ |
| **हरविजयमहाकाव्य**—राजानकरत्नाकरविरचित, राजानकालककृत टीकेसहित. ह्याचे ५० सर्ग आहेत. ... | ५ | ० | ० | ८ |

**पाण्डुरङ्ग जावजी,**

निर्णयसागरमुद्रणालयाधिपतिः.